श्रीसीतारामचन्द्राभ्यां नमः

# श्रीमद्वाल्मीकीयरामायणम्

## ( मूलमात्रम् )



त्वमेव माता च पिता त्वमेव
त्वमेव बन्धुश्च सखा त्वमेव।
त्वमेव विद्या द्रविणं त्वमेव
त्वमेव सर्वं मम देवदेव॥

गीताप्रेस, गोरखपुर

॥ श्रीहरि: ॥

# किंचिन्निवेदनीयम्

**विहितघनालंकारं विचित्रवर्णावलीमयस्फुरणम्।**
**शक्रायुधमिव वक्रं वल्मीकभुवं मुनिं नौमि॥**

विदन्त्येवेदं विदितवेदितव्या विद्वांसो यन्निजाप्रतिम-प्रतिभाप्रतिभावितबृहस्पतिना तप:पावितनिर्मलमतिना महर्षिकुलपतिना प्राचेतसेन त्रिकालदर्शिनाऽऽदिकविना ज्ञानवर्षिदेवर्षिनारदरदच्छद-निर्गतमूलकथावस्तु निदानीकृत्य क्रौञ्चद्वन्द्ववियोगोद्भूतशोकोद्गत-श्लोकात्मकोद्गारसूचितकरुणार्द्रहृदयेन पितामहप्रेरणया प्रणीतं कुशलवाग्भ्यां कुशलवाभ्यां तन्त्रीलयसंवीतं गीतं संगीतमविगीतं श्रीरामादिभिरपि श्रवणपुटैरमृतवत् पीतं पुरातनमपि क्षणे क्षणे नवनवायमानमनोऽभिरामरामणीयकस्य निधानं ध्वनिप्रधानं परिधृतहृद्यानवद्यपद्यपरिधानं रम्यरीतिराजितं भणितिवैचित्र्यविभ्राजितं दूरीकृतदोषदोषान्धकारं साधिकारं समानीतैर्नानाविधै: शब्दार्थोभयालंकारै: समलंकृतमपि प्रसादादिगुणैरमलंकृतमसम्भाव्यविशेषै: सम्भाव्यं केनाप्यपूर्वनिर्माणकौशलेन कमनीयं सचेतश्चेतश्चमत्कारकारिचारुतर-रचनावैचित्र्येण रमणीयं वसुधायामपि सुलब्धसुधामाधुरीधुरीणं सहृदयहृदयाह्लादकं चेदं रामायणं नामादिमहाकाव्यं वैरिञ्चप्रपञ्चतो विलक्षणं सुलक्षणं परिहृतनियतिनियन्त्रमनन्यपरतन्त्रं नवरसरुचिरं चिरं विजयतेतरां नितराम्।

सकलश्रुतिसंवेद्यश्रीरघुवरवरचरितमयत्वादवतरणमिदं महाकाव्य-माम्नायस्य, सदम्बुतरणमिव समुद्धरणसाधनं संसारापारपारावारत:, तारणं शरणागतानां वारणमघौघमत्तवारणानां धारणमसाधारण-सद्गुणसद्वृत्तराशीनां नि:सारणं च नि:शेषतो दुर्गुणदुराचाराणां तरणिरिवाशेषदोषाम्बुशोषणाय, सत्सरणिरिव पापतापहापक-परमानन्दपदप्रापणायेति सदा संस्मरणीयम्।

नेदं काव्यं किमपि पूर्वसिद्धं प्रसिद्धं लक्षणमक्षिलक्ष्यीकृत्य प्रादुष्कृतमपि त्वेतदेव प्रमाणभूतं महाकाव्यमादर्शीकृत्य परिस्फुटा: काव्यस्यालोचनापद्धतय:, लक्षितं लक्षणं रक्षिता रीतिर्गणिता गुणा अवलोकिता अलंकारा अभिव्यञ्जितो वाच्यातिशायी व्यङ्ग्योऽर्थो निर्द्धारितं धारितं चानुरूपं स्वरूपं महाकाव्यस्येत्यपि न जातु विस्मर्तव्यम्।

न केवलमियमदूष्यवैदुष्यविलसिताबालवन्द्यवल्मीकभुवो भारती भारतीयानामेव काव्यादर्शनिदर्शनाय निदर्शनायते, वैदेशिकानामपि कृते वै देशिकपदवीमदवीयसीमधिरोहतीत्यतिरोहितमेवोत्प्रेक्षावतां प्रेक्षावताम्।

तस्माद् विश्वस्मिन् विश्वेषां कवयतां कवीनामयमादि-महाकविर्महर्षिर्वाल्मीकि: परमो गुरुरिति निश्चप्रचं वक्तुं शक्यते। तदीयमहाकाव्यमाद्यं काव्यं लोकस्य मण्डनमिवाखण्डमहीमण्डलस्य सर्वोपरि वर्वर्ति। अत: सर्वैरेव सहृदयैरिदं समादरणीयं समर्हणीयं च। भारतस्य भारतीयानां त्विदं भूरिशो भृशं गौरवभारं तनोति। देशस्यास्यासुलभा सुरदुर्लभा च सम्पत्तिरनाकलितमूल्यो महान्राष्ट्रियो निधिश्च। इत्यालोच्य सर्वैरेवेदं संग्रहणीयं श्रवणीयं यथाधिकारं पठनीयं मननीयं च; यतोऽस्य महाकाव्यस्य 'एकैकमक्षरं पुंसां महापातकनाशनम्।'

काव्यस्य सनातनं बीजभूतमेतदेवाधीत्य महामुनिना श्रीकृष्णद्वैपायनेन पुराणानि महाभारतादिकं च निरमायिषतेति बृहद्धर्मपुराणे[१] सप्रपञ्चं प्रतिपादितम्। नानापुराणेषु च रामायणमाहात्म्यं गीतं स्कन्दपुराणवर्णितं माहात्म्यं त्वस्य ग्रन्थस्यारम्भ एव संयोजितमस्ति। इदमपि विश्रूयते यद् 'युधिष्ठिरानुरोधेन भगवता व्यासेन वाल्मीकीयरामायणस्यैका रामायणतात्पर्यदीपिकाख्या व्याख्यापि विलिख्य विख्यापिता; यस्या एकं हस्तलिखितं पुस्तकमद्यापि सम्प्राप्यते।' अस्या वार्ताया उल्लेखो दीवानबहादुररामशास्त्रिणा स्वनिर्मितस्य 'स्टडीज इन रामायण' इत्यभिधानस्य ग्रन्थस्य द्वितीये भागे विहित:[२]। १९४४ ईशवीये वत्सरे बड़ौदात: प्राकाश्यत चेदं पुस्तकम्। महाभारते द्रोणपर्वणि तु भगवता व्यासेन वाल्मीकेर्नामोल्लेखपुरस्सरं तदीय एक: श्लोक: समुद्धृतोऽवलोक्यते[३]। अग्निपुराणेऽपि नारदवाल्मीकिसंवादनिर्देशपूर्वकं[४] रामायणकथासार: संकलित: संलक्ष्यते पञ्चमादारभ्य त्रयोदशाध्यायपर्यन्तम्। एवमेव गरुडपुराणेऽपि पूर्वखण्डे (१४३ तमेऽध्याये) तैरेव श्लोकैस्तथाविध: सार: समगृह्यत। व्यासदेवेन महर्षेर्वाल्मीकेर्जीवनवृत्तमपि श्रद्धातिशयेनोपन्यस्तं स्कन्दपुराणे वैष्णवखण्डे वैशाखमाहात्म्ये

---

१. (क) पठ रामायणं व्यास काव्यबीजं सनातनम् । यत्र रामचरित्रं स्यात् तदहं तत्र शक्तिमान्॥
(बृहद्धर्मपुराणे, प्रथमखण्डे ३०। ४७, ५१)
(ख) रामायणे पाठितं मे प्रसन्नोऽस्मि कृतस्त्वया। करिष्यामि पुराणानि महाभारतमेव च॥
(बृहद्धर्मपुराणे १। ३०। ५५)

२. A curious Ms. is that of Rāmāyaṇa-Tātparya-Dīpikā which is said to have been an exposition of the meaning of the Rāmāyaṇa by Vyāsa at the request of Yudhiṣṭhira.
(Studies in Rāmāyaṇa, Riddles of Rāmāyaṇa By K.S. Ramshatri, Book II, P.1)

३. अपि चायं पुरा गीत: श्लोको वाल्मीकिना भुवि। न हन्तव्या: स्त्रियश्चेति यद् ब्रवीषि प्लवङ्गम॥
सर्वकालं मनुष्येण व्यवसायवता सदा। पीडाकरममित्राणां यच्च कर्तव्यमेव तत्॥ (१४३।६७-६८)
रेखाङ्किते पङ्क्ती रामायणे युद्धकाण्डे (८१। २८) इन्द्रजिदुक्तिरूपतयोपन्यस्ते अवलोकनीये।

४. रामायणमहं वक्ष्ये नारदेनोदितं पुरा। वाल्मीकये यथा तद्वत् पठितं भुक्तिमुक्तिदम्॥
(अग्निपुराणे ५।१)

सप्तदशाध्यायतो विंशतितमाध्यायपर्यन्तमावन्त्यखण्डेऽवन्तीक्षेत्रमाहात्म्ये चतुर्विंशतितमेऽध्याये प्रभासखण्डे २७८ तमेऽध्यायेऽध्यात्मरामायणेऽयोध्याकाण्डे (अ० ६।६४—९२) च। एवमन्यत्रापि तेन स महानादिकविः सादरं समुपजीव्यतया संस्मृतः।

परवर्तिभिरपि सहृदयैः समीक्षकैः सत्कविभिश्च समाश्रितः स आदिमः काव्यगुरुस्तदीयमहाकाव्यस्य रामायणस्य पठन-श्रवणमननादिना। सरस्वत्या विलासेन कविकुलगुरुणा कालिदासेनापि रघुवंशस्यादिमे सर्गे पूर्वसूरिभिरित्यादिना स एवोपजीव्यो महाकविः श्रद्धातिशयेन समनुध्यातः। चतुर्दशे सर्गे च 'सोऽनुव्याहरणाद्भूयः शोकः श्लोकत्वमागतः' इति तदीयोक्तिमनुस्मृत्योपजीव्य च समादरणपुरस्सरं पद्यमिदं व्यधायि—

**तामभ्यगच्छद् रुदितानुसारी**
**मुनिः कुशेध्माहरणाय यातः।**
**निषादविद्धाण्डजदर्शनोत्थः**
**श्लोकत्वमापद्यत यस्य शोकः॥**

(१४।७०)

सहृदयानामानन्दवर्धनेन ध्वन्यालोककृताऽऽचार्येणानन्दवर्धनेनापि तथैवाभ्यधायि—

**काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।**
**क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः॥**

(ध्वन्यालोके १।५)

करुणरसाचार्यो भवभूतिस्तु भवभूतिरेवेति सम्मन्यते। सोऽपि प्राचेतसस्येवोपजीव्यतामुद्बोधयति (उत्तररामचरिते द्वितीयेऽङ्के)—'मुनयस्तमेव पुराणब्रह्मवादिनं प्राचेतसमृषिं·····उपासते' इत्यादिना। सुभाषितपद्धतिप्रणेता शार्ङ्गधरोऽपि परवर्तिनामधमर्णतामादिकवेश्चोत्तमर्णतामेवानुवर्णितवान्—

**कवीन्द्रं नौमि वाल्मीकिं यस्य रामायणीकथाम्।**
**चन्द्रिकामिव चिन्वन्ति चकोरा इव साधवः॥**

दशरूपककृता धनञ्जयेनापि[1] रामायणादि विभाव्यैव कथासूत्रणं समारम्भणीयमिति सम्मतिर्दीयते काव्यं चिकीर्षुभ्यः। कविः कुमारदासोऽपि[2] जानकीहरणे मदं नवैश्वर्यलवेनेति पद्यं रामायणश्लोकमेवोपजीव्य निरमात्। भारत्या हास इव भासमानः कविवरो भासोऽन्ये कवयो विद्वांसश्च लोकशङ्करशङ्कररामानुजावतारश्रीरामानुजाद्याः सम्प्रदायाचार्यवर्याश्च भोजप्रभृतयो विपश्चितो भूपतयश्च, हिंदीसंसारे शशिना विशेष्यमाणः साहित्यप्राणो महात्मा तुलसीदासश्चेत्यादयः[3] समेऽपि सहृदयास्तमादिकविमानतास्तदीयं महिमानं गौरवं च श्रद्धाभरेण समगायन्।

## आदिकवेः संक्षिप्तं जीवनवृत्तम्

तत्रभवान् महामुनिर्वाल्मीकिः 'प्रचेतसोऽहं दशमः पुत्रो राघवनन्दन।' (वा० रा० ७।९६।१९) इत्यात्मानं प्राचेतसत्वेन पर्यचाययत्। अध्यात्मरामायणेऽपि (७।७१।३१) मुनिरयमात्मनः प्रचेतःपुत्रतामेवाख्यातवान्। स्कन्दपुराणे वैशाखमाहात्म्यप्रसंग एवं वर्णनमुपलभ्यते—जन्मान्तरेऽयं व्याध आसीत्ततोऽपि प्राक्तने जन्मनि स्तम्भनामा श्रीवत्सगोत्रो ब्राह्मण आसीत्। व्याधजन्मनि शङ्खमुनेः सङ्गाद् रामनामजपेन जन्मान्तरेऽयमग्निशर्मा (मतान्तरेण रत्नाकरनामा) ब्राह्मणोऽभूत् (तदानीमेवास्य पिता प्रचेता अभूदित्यनुमीयते। तत्रापि वने व्याधसङ्गात् प्राक्तनसंस्कारवशाच्च कियन्तं कालं व्याधकर्मण्येवायं संलग्न आसीत्। तदनु सप्तर्षिसङ्गात् 'मरा मरा' इति जपित्वा तपःकाले वल्मीकावृतदेहत्वाद् वाल्मीकिरिति ख्यातिं गतो यथाकालं वाल्मीकीयं रामायणमरीरचदिति। वङ्गभाषायां कृत्तिवासे रामायणे, रामचरितमानसेऽध्यात्मरामायणे (२।६।६४ त आरभ्य ९२ पर्यन्तम्), आनन्दरामायणे राज्यकाण्डे (१४।२१—४९), भविष्यपुराणे प्रतिसर्गपर्वणि (४।१०) चेयं कथा किंचिद् भेदेन सुस्पष्टं वर्णिता। एतेनास्य निम्नजातितां प्रख्यापयन्तः परास्ताः।

## रामायणोपरि विविधाष्टीकाः

वाल्मीकिरामायणोपरि बहुसंख्याष्टीकाष्टीकिताः समुपलभ्यन्ते। तथा हि—(१) कतकाख्या व्याख्या, (नागोजिभट्टेन गोविन्दराजेन च स्वव्याख्यायां एतस्या नाम बहुधोल्लिखितं तदीयांशविशेषस्य समुद्धरणमपि दत्तं यत्र तत्र) (२) नागोजिभट्टविहितं रामायणतिलकं 'रामाभिरामी' समाख्या व्याख्या वा, (३) गोविन्दराजकर्तृकं रामायणभूषणनामधेयं व्याख्यानम्, (४) श्रीशिवसहायेन समनुष्ठिता रामायणशिरोमणिसमाख्या व्याख्या। (तिलकाद्यास्तिस्रष्टीकाः 'गुजराती प्रिंटिंग प्रेस' नाम्नो मुद्रणालयतः सममेव सम्मुद्र्य प्रकाशं नीताः), (५) माहेश्वरतीर्थकृता तीर्थव्याख्या तत्त्वदीपो वा, (६) श्रीरामानुजाचार्यरचिता रामायणव्याख्या, (७) वरदराजकृतो

---

१. इत्याद्यशेषमिह वस्तुविभेदजातं रामायणादि च विभाव्य बृहत्कथां च।
आसूत्रयेत्तदनु नेतृरसानुगुण्यां चित्रां कथामुचितचारुवचःप्रपञ्चैः॥

(दशरूपके १।६८)

२. न स संकुचितः पन्था येन वाली हतो गतः। समये तिष्ठ सुग्रीव मा वालिपथमन्वगाः॥
(किष्किन्धा० ३४।१८) इति श्लोकमुपजीव्यैव पद्यमिदं निरमायि कुमारदासेन—
मदं नवैश्वर्यलवेन लम्भितं विसृज्य पूर्वं समयो विमृश्यताम्।
जगज्जिघित्सातुरकण्ठपद्धतिर्न बालिनैवाहततृप्तिरन्तकः॥

(जानकीहरणे १२।३६)

३. बंदउँ मुनि पद कंजु रामायन जेहिं निरमयउ 'जान आदिकबि नाम प्रतापू' 'बालमीकि भए ब्रह्म समाना' (रामचरितमानसे) 'जहाँ बाल्मीकि भये ब्याध ते मुनींदु साधु' 'मरा मरा' जपें सिख सुनि रिषि सातकी' (कवितावल्याम् उत्तरकाण्डे १३८ तः १४० पर्यन्तम्) 'कहत मुनीस महेस महातम, उलटे सूधे नामको' (विनयपत्रिकायाम्)।

विवेकतिलकः, (८) त्र्यम्बकराजमखानीकृता धर्माकूतव्याख्या, (९) रामानन्दतीर्थविहिता रामायणकूटव्याख्या। एतदतिरिक्ताः (१०) चतुरर्थदीपिका, (११) रामायणविरोधपरिहारः, (१२) रामायणसेतुः, (१३) तात्पर्यतरणिः, (१४) शृङ्गारसुधाकरः, (१५) रामायणसप्तविम्बः, (१६) मनोरमाप्रभृतयो विविधाष्टीका रामायणस्य गम्भीरमभिप्रायमुद्घाटयन्ति। 'रीडिंग्स इन रामायण' नामधेयग्रन्थोक्तदिशाऽपरा अपीमाष्टीकाष्टीकयन्ति वाल्मीकीय-रामायणस्य भालम्—(१) अहोबलकृता वाल्मीकिहृदयाख्या व्याख्या, (२) तदीयशिष्यकृता विरोधभञ्जिनी टीका, (३) माधवाचार्यकृता रामायणतात्पर्यनिर्णयाभिधा व्याख्या, (४) श्रीअप्पय्यदीक्षितेन्द्रविरचितापि 'रामायणतात्पर्यनिर्णयाख्या' एव व्याख्या (यस्यां तेन रामायणस्य शिवपरत्वं साधितम्), (५) प्रबालमुकुन्दसूरिरचिता रामायणभूषणाख्या व्याख्या, (६) श्रीरामभद्राश्रमनिर्मिता सुबोधिनी टीका। डाक्टर एम् कृष्ण-माचारीति नाम्ना प्रसिद्धेन विदुषा 'हिन्दी ऑफ क्लासिकल संस्कृत लिटरेचर' नामधेये स्वग्रन्थेऽन्यासामपि कतिपयटीकानां नामोल्लेखः कृतो यासां लेखका न ज्ञायन्ते। तथा हि—अमृतकनकाख्या व्याख्या, रामायणसारदीपिका, गुरुबाला, चित्तरञ्जनीत्यादयः। आचारिमहोदयेन वरदराजाचार्यविहित-रामायणसारसंग्रहस्य, देवरामभट्टकृतविषयपदार्थव्याख्यायाः, नृसिंहशास्त्रिनिर्मितायाः कल्पवल्लिकायाः, वेङ्कटाचार्यविहित-रामायणार्थप्रकाशिकायाः, वेङ्कटाचार्यकृतरामायणकथाविमर्शस्य च नामोल्लेखो विहितोऽन्येषां च व्याख्याग्रन्थानाम्। एताः सुज्ञाता व्याख्या निर्दिष्टा या ह्यविज्ञाताः संस्कृतव्याख्यास्तासां तु चर्चैव नास्ति। हिंदीभाषायामपि द्वैताद्वैतविशिष्टाद्वैतमतावलम्बिना-मार्यसमाजीयानां च विविधा व्याख्या उपलभ्यन्ते। बङ्गमहाराष्ट्रगुर्जरादिप्रान्तीयभाषासु, 'इंगलिश, फ्रेंच' प्रभृतिवैदेशिक-भाषास्वपि विहितानां टीकाटिप्पणीनामसंख्या ग्रन्थाः स्युरिति, सर्वथा सम्भाव्यमेव।

## काव्योचितं वैशिष्ट्यम्

वाल्मीकीयं रामायणं भूतलस्याद्यं महाकाव्यमिति सर्वसम्मतं मतम्। इदमेव काव्यादर्शानां जन्मभूरिति भूरिशो भणितं विद्वद्भिः। एतदेव लक्ष्यमालक्ष्य भगवता व्यासेनाग्निमुखोद्गतं काव्यलक्षणं स्थापितम्—काव्यं स्फुरदलंकारं गुणवद्दोषवर्जितम् (अग्नि० ३३७।७) इति। इदमेव लक्षणमुपजीव्य मम्मटोऽप्याह—'तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि' (काव्यप्रकाशे १।४) इति विदुषां मनोरमं काव्यलक्षणम्। रामायणानुशीलनपरेणैव व्यासेन शास्त्रेतिहासाभ्यां शब्दार्थप्रधानाभ्यां काव्यस्य पार्थक्यमवधारितं तत्र वाच्यातिशायिव्यङ्ग्यार्थस्यैव प्राधान्यात्—

**शास्त्रे शब्दप्रधानत्वमितिहासेषु निष्ठता।**
**अभिधायाः प्रधानत्वात् काव्यं ताभ्यां विभिद्यते। इति।**

(अग्नि० ३३७। २-३)

एतदालोच्यैव ध्वन्यालोके (१।१) काव्यस्यात्मा ध्वनिरिति मतमङ्गीकृतं साधितं समर्थितं च ध्वनिकृता[1] रामायणप्रभृतिनि लक्ष्ये सर्वत्र सुप्रसिद्धव्यवहारता चाभिहिता ध्वनेः स्वरूपस्य। तामेव सरणिमनुसृत्य मम्मटेनापि ध्वनेरेवोत्तमकाव्याङ्गीकृता—

**इदमुत्तममतिशयिनि व्यङ्ग्ये**
**वाच्याद् ध्वनिर्बुधैः कथितः।**

(काव्यप्रकाशे १।४)

ध्वन्यमानो रस एव काव्यजीवितमिति समेषामेव सचेतसां सम्मतम्। भगवानग्निरप्याह—वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्। (अग्नि० ३३७। ३३) इति। तादृशरसविशिष्टमेव वाल्मीकीयं काव्यं कुशलवाभ्यां गीतम्—

**रसैः शृङ्गारकरुणहास्यरौद्रभयानकैः।**
**वीरादिभी रसैर्युक्तं काव्यमेतदगायताम्॥**

(वा० रा० १।४।९)

रामायणमहाकाव्यस्यास्य करुणरस एवाङ्गी तस्यैव प्रायेण सर्वत्र समासाद्यमानत्वादन्ये रसास्तदङ्गभूता एव यथावसरमास्वाद्यन्ते। ध्वनिकृताप्युक्तम्—'तथा चादिकवेर्वाल्मीकेर्निहतसहचरविरह-कातरक्रौञ्च्याक्रन्दजनितः शोक एव श्लोकतया परिणतः, शोको हि करुणस्थायिभावः।' इति (ध्वन्यालोके १। ५) 'रामायणे हि करुणो रसः स्वयमादिकविना सूत्रितः' 'शोकः श्लोकत्वमागतः' इत्येवंवादिना। निर्व्यूढश्च स एव सीतात्यन्तवियोगपर्यन्तमेव स्वप्रबन्ध-मुपरचयता।' (ध्वन्यालोके ४। ५) इति च। मा निषादेति श्लोके करुणो रस एव ध्वन्यते। अत्र पतिविरहकातरा क्रौञ्ची व्याधविद्धः शोणितपरीताङ्गो भूतले चेष्टमानः क्रौञ्चश्चालम्बनविभावः व्याधकर्तृकं निहननमुद्दीपनविभावः क्रौञ्च्याः क्रन्दनमनुभावः; एवं विभावानुभावाभ्यामभिव्यज्यमानश्चिन्ताविषाददैन्यमोहादिभिः संचारिभिः संचार्यमाणः शोकाख्यः स्थायिभावः करुणरसतामुपेतश्चर्वणाविषयो बोभवीति। श्लोकोऽयमसंलक्ष्य-क्रमव्यङ्ग्यध्वनेरुदाहरणम्। अत्र वाक्यार्थहेतुकं काव्यलिङ्गमलंकारो बोध्यः। ध्वन्यालोके द्वितीयोद्योतेऽत्यन्ततिरस्कृतवाच्यध्वनेरुदाहरणे-ऽयमपरो वाल्मीकिरामायणश्लोकः समुद्धृतः—

**रविसंक्रान्तसौभाग्यस्तुषारारुणमण्डलः।**
**निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते॥**

(वा० रा० अर० १६। १३)

हेमन्तवर्णने पञ्चवट्यां रामस्योक्तिरियम्। अत्र अन्ध इति चोपहतदृष्टिर्जात्यन्धस्यापि गर्भे दृष्ट्युपघातात्। अन्धोऽयं पुरोऽपि न पश्यतीत्यत्र तिरस्कारोऽन्धार्थस्य न त्वत्यन्तम्। इह त्वादर्शस्यान्धत्वमारोप्यमाणमपि न सह्यमित्यन्धशब्दोऽत्र पदार्थस्फुटीकरणाशक्तत्वं नष्टदृष्टिगतं निमित्तीकृत्यादर्श लक्षणया प्रतिपादयति। असाधारणविच्छायत्वानुपयोगित्वादिधर्मजातमसंख्यं प्रयोजनं व्यनक्तीत्याहुर्लोचनेऽभिनवगुप्तपादाचार्याः।

निबन्धकलेवरवृद्धिभयान्नान्येषां रसानां गुणालंकारादि-चमत्काराणां चोदाहृतिरिहोद्ध्रियते। रामायण एव सहृदयैर्यथास्थलं ते ते रसाः समास्वाद्याः। संध्याप्रभातप्रावृट्छरद्वसन्तविपिन-

१. ध्वनेः स्वरूपं............रामायणमहाभारतप्रभृतिनि लक्ष्ये सर्वत्र प्रसिद्धव्यवहारम्। (ध्वन्यालोके १। १)

गिरिग्रामनगरसरित्समुद्रादीनां यादृशं मनोरमं सरसमधुरं प्रसन्नगम्भीरं सालंकारं वर्णनमिह रामायणे समुपलभ्यते तादृशमन्यत्र सुदुर्लभमिति सहृदयाः संविदन्ति। दण्डिभामहप्रभृतिभिराचार्यैरपि रामायणमेव लक्ष्यीकृत्य काव्यलक्षणं संलक्षितं विलक्षणाश्च तत्सम्बन्धिनश्चमत्काराः प्रकाशमानीताः। सुन्दरकाण्डस्य काव्यसौन्दर्यं तु सर्वतोऽधिकमति समेषां सुधियां सम्मतम्। त्र्यम्बकराजेन सुन्दरकाण्डव्याख्यायां सर्वानेव श्लोकान् रसालंकारादियुतान् दर्शयित्वा तन्नाम्नोऽन्वर्थता समर्थिता। आदिकविकर्तृकं प्राकृतदृश्यचित्रणं तु विचित्रामेव चारुतामात्मन्यादधाति। हनुमतःसंलापकौशलं श्रीरामस्य प्रतिपादनशैली दशरथस्य भाषणपद्धतिः कुत्रचिद् रावणस्यापि सम्भाषणकला परं वैलक्षण्यमालक्षयति। श्रीरामकर्तृकयात्राकालिकमुहूर्त-विचारस्त्रिजटायाः स्वप्नो विभीषणकृतमपशकुनवर्णनमित्यादिप्रसङ्गा आदिकवेर्ज्यौतिषविज्ञानं ज्योतिःशास्त्रस्य तन्मते प्रामाण्यं चोपपादयन्ति। श्रीरामस्यायोध्यातो वनं प्रति प्रस्थाने सर्वे ग्रहा एकस्मिन् राशौ व्यवतिष्ठन्ति स्म।[१] दशरथेनात्मनः कृते दैवज्ञैरावेदितान्यनिष्टानि फलानि श्रीरामं प्रति वर्णितानि। (वा० रा० अयो० ४। १८)[२] एतेन तदानीं ज्योतिःशास्त्रस्य सर्वत्र समादरः संसूच्यते।

## सद्धर्मस्योपदेशः

मातुः पितुश्च सेवायां पुत्रस्य कियानुत्साहो भवेदिति द्रष्टव्यम्—अयोध्याकाण्डेऽष्टादशे सर्गेऽष्टाविंशतस्त्रिंशश्लोकपर्यन्तम्। एकोनविंशे सर्गे च ५, ७, ८, २०, २२, २४ प्रभृतिषु श्लोकेषु। तस्मिन्नेव काण्डे (३०। ३५—३७) मातापितृविषयिणी भक्तिरपि प्रतिपाद्यते। एकोनचत्वारिंशे सर्गे (२४, ३०) पतिभक्तिरुपपादिता। १०९ सर्गे ११—१३ श्लोकेषु सत्यस्य महिमोपवर्णितः। ११७ सर्गे सतीधर्मस्य सुन्दरतरमुपपादनमालोक्यते। एवमन्यत्रापि कर्तव्यानामुपदेशो दृश्यते। किं बहुना समग्रं रामायणमेवोपदेशः—रामादिवत् प्रवर्तितव्यं न रावणादिवदित्येवंरूपेण।

## जपतपसोः प्राधान्यम्

तपःशब्दत एव रामायणमारभ्यते। वाल्मीकिश्च तपस्वीति पदेन विशेष्यतेऽतस्तपस्तदभ्युदये हेतुर्जपश्च श्रीराममन्त्रस्येति सूच्यते। तपसीश्वरप्रणिधानाख्यनियमस्य प्राधान्यात्तज्जपस्तदर्थभावनमितियोग-सूत्रोक्तदिशा श्रीराममन्त्रस्यैव जपानुध्यानयोस्तेनानुष्ठानमवधार्यते। तपोमूलक एव तस्मिन् काव्यप्रतिभाप्रतिभासः, तपसैव तस्य ब्रह्मसाक्षात्कारः साशीः काव्यप्रणयनप्रेरणाप्राप्तिश्च। श्रीरामजपानुध्यानत एव तेन श्रीरामचरित्राणामनुदर्शनं व्यधायि। विश्वामित्रस्य भगीरथस्य भृग्वादीनां च तपसोऽनुवर्णनात् पारत्रिकोत्कर्षे तप एव कारणमिति प्रतिपाद्यते। ऐहलौकिकोत्कर्षेऽपि तपः परं साधनमिति सिद्ध्यति, रावणादीनां तथा दर्शनात्तेषामधःपतनं तु दुराचरणमूलकमिति न विस्मर्तव्यम्। वने श्रीरामादीनां तपस्विभिः सह सङ्गः समागमश्च तपोमाहात्म्यमेव प्रथयति, तपः प्रति परां निष्ठां च तदानीन्तनानां सताम्।

## श्रीरामस्य परमात्मरूपत्वम्

परब्रह्मपरमात्मा नारायणो विष्णुरेव श्रीरामात्मनावतीर्ण इति रामायणतः सम्यगवगम्यते। बालकाण्डे षोडशे सर्गे श्रीविष्णोरेव रामात्मनावतारस्य कथा सुस्पष्टं प्रतिपादिता। युद्धकाण्डे (११७ सर्गे) ब्रह्मणा—'सहस्रशृङ्गो वेदात्मा शतशीर्षो महर्षभः' इत्यादिना वेदवेद्या परब्रह्मतैवोपपादिता। एवमुपक्रमोपसंहाराभ्यां तस्य परात्परत्वं परमात्मत्वं च सिद्धमेव। मध्येऽपि तदभ्यासोऽवलोक्यते; यथा—बालकाण्डे परशुरामेणोच्यते—'अक्षय्यं मधुहन्तारं जानामि त्वां सुरेश्वरम्' (७६। १७) इति। सुमित्रा कौसल्यामाश्वासयन्ती—

**सूर्यस्यापि भवेत्सूर्यो ह्यग्नेरग्निः प्रभोः प्रभुः।**
**श्रियाः श्रीश्च भवेदग्र्या कीर्त्याः कीर्तिः क्षमाक्षमा॥**
**दैवतं देवतानां च भूतानां भूतसत्तमः।**

(अयोध्या० ४४। १५-१६)

—इत्यादिना श्रीरामस्य परब्रह्मतामेव सम्बोधयति। शरणागताभयदाने यादृशं सबलं सयुक्तिकं वचनमुक्तं श्रीरामेण तत्तदीयं कर्तुमकर्तुमन्यथाकर्तुं सामर्थ्यमेव द्योतयति—

**सकृदेव प्रपन्नाय तवास्मीति च याचते।**
**अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम॥**

नानीश्वरः कश्चित् सर्वभूतेभ्यः सर्वभूतेभ्योऽभयं दातुमीष्टे। हनुमानपि रावणसमक्षे श्रीरामस्य पारमेश्वरीं शक्तिं निःशङ्क-मुद्घोषयत्—

**सर्वाँल्लोकान् सुसंहृत्य सभूतान् सचराचरान्।**
**पुनरेव तथा स्रष्टुं शक्तो रामो महायशाः॥**
**ब्रह्मा स्वयम्भूश्चतुराननो वा**
**रुद्रस्त्रिनेत्रस्त्रिपुरान्तको वा।**
**इन्द्रो महेन्द्रः सुरनायको वा**
**स्थातुं न शक्ता युधि राघवस्य॥**

(वा० रा० ५। ५१। ३९, ४४)

रावणवधमनु विलपन्ती रावणपत्नी मन्दोदरी तु सर्वं रहस्यमेवोद्घाटितवती भगवतः—

**व्यक्तमेष महायोगी परमात्मा सनातनः॥**
**अनादिमध्यनिधनो महतः परमो महान्।**
**तमसः परमो धाता शङ्खचक्रगदाधरः॥**
**श्रीवत्सवक्षा नित्यश्रीरजय्यः शाश्वतो ध्रुवः।**
**मानुषं रूपमास्थाय विष्णुः सत्यपराक्रमः॥**

(युद्ध० १११। ११—१३)

## भौगोलिकं विवरणम्

रामायणसम्बन्धिभूगोलोपर्यपि भृशमनुसंधानं संजातमस्ति। कल्याणस्य रामायणाङ्के कनिंघममहोदयस्य 'ऐन्सेन्ट-डिक्शनरी' नामके कोषग्रन्थे 'दे' महोदयस्य 'जागरफिकल डिक्शनरी' नामके कोषे चैतद्विषये भृशमनुसंधानं लक्ष्यते। केचिदनुसंधातारः स्वतन्त्रान् निबन्धानपि न्यभान्त्सुः। लंदननगरस्थ 'ऐशियाटिकसोसायटीजर्नल' नामकपत्रिकायामप्येतद्विषयक एको महत्त्वपूर्णो निबन्धो मुद्रित आसीत्। पं० गिरीशचन्द्रकर्तृके

१. दृश्यताम्—'दारुणाः सोममभ्येत्य ग्रहाः सर्वे व्यवस्थिताः' (अयोध्या० ४१। ११) इत्यत्र तिलकाख्यं व्याख्यानं शिरोमणिश्च।
२. अवष्टब्धं च मे राम नक्षत्रं दारुणग्रहैः। आवेदयन्ति दैवज्ञाः सूर्याङ्गारकराहुभिः॥

वेदधरातलाख्ये ग्रन्थेऽपि समीचीना सामग्री समवलोक्यते। लङ्काविषयकास्त्वनेके निबन्धाः सन्ति। 'सर्वेश्वर' पत्रिकायामेकस्मिन् निबन्धे 'मालद्वीप' एव लङ्केति पक्षः पोषितः। केचित्तु लङ्का विध्वास्ता महासागरे मग्ना दुर्ज्ञेया चेति मन्यन्ते। वाल्मीकीये बालकाण्डे द्वाविंशतितमे सर्गे षष्ठसप्तमश्लोकयोर्निर्दिष्टेषु नगरेषु या कौशाम्बी पुरी सा वर्तमानः 'कोसम' नामको ग्राम एव य इदानीं प्रयागान्नैर्ऋत्ये सप्तकोशं भूभागमतीत्य विद्यते। महोदयं नाम नगरं तु तदधिपस्य कुशनाभस्य कन्यानां वायुशापेन कुब्जात्वात्कान्यकुब्जनाम्ना ख्यातिमगमत्। कान्यकुब्ज एव शब्दः क्रमेणापभ्रंशं गत इदानीं 'कन्नौज' इति परिणतः। धर्मारण्यं तु सुप्रसिद्धा गया पुर्येव। गिरिव्रजस्तु विहारप्रान्ते 'राजगृह' (राजगिरि) नाम्ना प्रसिद्धं तीर्थभूतं स्थानमेव। बालकाण्डे चतुर्विंशे सर्गे वर्णितौ मलदकरूषाख्यौ जनपदौ तु सम्प्रति विहारप्रान्ते वर्तमानस्य अरण्य (आरा) जनपदस्य पश्चिमोत्तरदिग्वर्तिनि भूभाग एवास्ताम्। पञ्चनदप्रान्ते विपाशाशतद्रवोरन्तरालेऽवस्थितो भूभाग एव पुरातनः केकयो जनपद इति बहूनां विदां सम्मतम्। केचित्तु 'गजनी' नामकं स्थानं केकयं मन्यन्ते तन्नातिश्रद्धेयं तस्य प्रदेशस्य गान्धारदेशान्तर्गतत्वात्। केचन वितस्तातटवर्ती 'कीकना' ख्यो भूभागः केकयः' इति मन्यन्ते। वाल्मीकेराश्रमो जाह्नव्या अविदूरतः तमसातटनिकट एवासीदिति बालकाण्डे द्वितीये सर्गे तृतीये श्लोके तथैव वर्णनादवगम्यते। नारदवाल्मीकिसंवादकाले सोऽत्रैवासीदिति सुस्पष्टम्। श्रीरामस्य चित्रकूटवासकाले चित्रकूटसमीपेऽपि तस्याश्रम आसीदिति २।५६।१६ श्लोके सीतारामलक्ष्मणानां तत्राभिगमनस्य वर्णनाद् विज्ञायते। सीतापरित्यागकाले स गङ्गातटनिकटवर्तिनि निजे कस्मिंश्चिदाश्रमे निवसति स्मेति विज्ञायते, उत्तरकाण्डे एकोनपञ्चाशत्तमे सर्गेऽर्घ्यमादाय जाह्नवीतटे सीतासमीपे तदागमनस्य वर्णनात्। अयमेवाश्रम इदानीं 'बिठूर' नाम्ना प्रसिद्धिमुपेतः। शत्रुघ्नस्य मथुरायात्राकाले मार्गे तदाश्रमे रात्राववस्थानस्य वर्णनादप्येतदेव मतं पुष्यति। 'बी० एच० वडेर' महोदयेन कल्याणस्य रामायणाङ्के ४९६ पृष्ठे वाल्मीकाश्रमस्थितिः प्रयागतो दक्षिणस्यां दशक्रोशमिते दूरे प्रतिपादिता। सम्मेलनपत्रिकायाम् ४३। २ अङ्के १३३ तमेपृष्ठेऽ-स्याश्रमस्य स्थानं 'प्रयाग झाँसी रोड' 'राजापुर मानिकपुर रोड' इत्यनयो राजमार्गयोः सङ्गमस्थान एवासीदिति वर्णितम्। गोस्वामिनः श्रीतुलसीदासस्य मतेऽस्याश्रमो वारिपुरदिगपुरबीच (बिलसति भूमि) आसीत्। प्राचीना महर्षयः परिभ्रमणशीला आसन्नतो नानादेशेषु स्थानेषु च तेषां विविधानामाश्रमाणामवस्थानं न विरुद्ध्यते।

## रामायणे राजनीतिर्मनोविज्ञानं च

श्रीरामनीतिरेव वाल्मीकिसम्मता राजनीतिः सा तूत्कर्षस्य परां कोटिमाटीकते। विभीषणशरणागतिप्रसङ्गे युद्धकाण्डे सप्तदशेऽष्टादशे च सर्गे सा निपुणं निभालनीया। विस्तरभियेह नोद्ध्रियन्ते तदंशविशेषाः। प्रमदावने (अशोकवाटिकायाम्) सीतादर्शनसमये श्रीहनुमतो हृदयाम्भोधौ यद्विचारवीचीनामुद्वेलनमभूत्तन्मनोविज्ञानविद्भिर्विशेषतो वीक्षणीयं समीक्षणीयं च। सीतास्वान्तसमुद्गततर्कवितर्कतरङ्गाणां क्रमोऽपि समाकलनीय एव। सुन्दरकाण्डे त्रिंशादारभ्य चत्वारिंशत्तमसर्गपर्यन्तं हनुमतो नीतिर्विचारसरणिश्च सम्यगवेक्षणीये।

## उपसंहारः

रामायणे नराणां वानराणां मुनीनां रक्षसां वनेचराणां निषादप्रभृतीनां च सभ्यतासंस्कृतीनां सम्यक्तरं चित्रणं चित्तं चमत्करोति। अङ्गविदेहकोसलकेकयप्रभृतिजनपदानां तत्रत्यजनानां चाचारा व्यवहाराश्चारादवगम्यते। केकयतोऽयोध्यापर्यन्तं तदानीन्तनमार्गस्य परितो मार्गं च नानाविधानां देशानां ग्रामाणां च वर्णनं परमाकर्षणकरमन्तःकरणस्य। राज्याभिषेकाय समाहूतस्य रघुनन्दनस्य वने निष्कासनमभूत्तदापि तस्य मन्दस्मितविलसित-शरदिन्दुसुन्दरवदने मनागपि मालिन्यं नोदितमित्यालोच्य कस्य जनस्य न विस्मयविमुग्धं स्यान्मनः। सीतायाः सतीत्वं भरतादीनां भ्रातृभक्तिर्मिथोऽनुरागश्चेत्यादिविलक्षणा भावा भुवनत्रितयेऽपि तुलां न बिभ्रति। आर्यसंस्कृतेरनुपममादर्शस्वरूपमुपलभ्यते रामायणे। आर्यावर्तस्य तदानीन्तनं चित्रं मानचित्रं चेतश्चक्षुर्विषयीक्रियते, यदेयमार्यजातिः समुन्नतिशैलस्य सर्वोत्तुङ्गं शृङ्गं समाधिरूढासीत्। सरय्ववारपारयोर्वसन् कोसलजनपदः पुरा दशरथस्य दाशरथेश्च साम्राज्यकाले यथा प्रभूतधनधान्यः सुभिक्षसमन्वित आधिव्याधि-विरहितश्चासीत्तदिदानीं कथामात्रं प्रतीयते। तदानीमिहान्वेषणादपि कोऽपि कामी कदर्यः क्रूरो नास्तिको वा नोपलभ्यते स्म। गोधनसमृद्धेराधिक्यमासीत्। महर्षीणां संनिधौ क्षुत्तृषोपशमशक्तिशालिन्यौ विद्ये आस्ताम्। विविधानि विस्मयकराणि दिव्यास्त्राणि प्रसृमरप्रचाराणि समभूवन्। इदानीं बहूनि विमानानि विलोक्यन्ते, परन्तु पुरातनस्यैकस्यापि पुष्पकस्य तुलां न कानिचिदारोढुं शक्ष्यन्ति। ऋक्षेषु पक्षिषु वानरेष्वपि मानुषान् प्रति सौहार्दमतुला शक्तिश्चास्ताम्। छायाग्रहणेनैव शरीरस्याप्याकर्षणकरी कापि विद्या निशाचरेषु समवलोक्यते स्म। एवं विधविविधविषयविलसितं प्रामाण्ये श्रुतिशास्त्रसम्मितमुपदेशे तु कान्तासम्मितं नैकविधकाव्यगत-चमत्कारचारुकलेवरमात्मभूतरसध्वनिसमन्वितमिदं महाकाव्यं नात्मनस्तुलनां रक्षति क्वापि त्रिलोक्यामपि। वयं त्वेवं ब्रूमो यदस्या वल्मीकभुवो भारत्या अहो प्रौढिपरिपाकः। अहो गाम्भीर्यम्!! किञ्चाहो गीस्तरङ्गभङ्गी!! किं बहुना, प्रतिपदमेतस्याः साहित्य-सारसंचयैश्चिरं चेतश्चमत्कुरुत इति भावुकजनमानसप्रत्यक्षैकसाक्षिकम्।

भारतेऽस्य महाकाव्यस्य चत्वारः पाठाः प्रचलन्ति। पश्चिमोत्तरशाखीयो वङ्गशाखीयो दाक्षिणात्यशाखीय औदीच्यशाखीयश्च। तत्र दाक्षिणात्यौदीच्यशाखयोः पाठे सर्वथा साम्यं बहुविधटीका-समलंकृतोऽप्यसौ पाठ इति स एवेह संगृहीतः। तदिदं मूलमात्रं संस्करणं प्रकाश्य विदुषां समक्षमुपस्थाप्यते। अत्र तिलकभूषणटीकाद्वयानुगृहीतः पाठ एव प्रायेणानुगृहीतः। संस्करणेऽस्मिन्नशुद्धिनिरासाय नितरामवधाने दत्तेऽपि प्रमादादधुनाऽप्यशुद्धयोऽवशिष्टा भवेयुरिति सम्भाव्यते। तदर्थं चात्यर्थक्षमाभ्यर्थनपुरःसरं विद्वांसोऽनुरोध्यन्ते तत्सूचनाप्रदानानुग्रहाय, यतोऽनन्तरभाविनि संस्करणे तासामपि निरासार्थं प्रयासो विधीयेतेति शुभमावेदयते—

**पाण्डेयो रामनारायणदत्तशास्त्री**

॥ श्रीहरिः ॥

॥ श्रीसीतारामचन्द्राभ्यां नमः ॥

# माहात्म्यसहित श्रीमद्वाल्मीकीयरामायणस्थविषयाणामनुक्रमः

विषयाः पृष्ठाङ्काः



## माहात्म्ये

अध्याये



## बालकाण्डे

सर्गे

## अयोध्याकाण्डे

## अरण्यकाण्डे

## सुन्दरकाण्डे

## उत्तरकाण्डे

॥ श्रीसीतारामचन्द्राभ्यां नमः ॥

# श्रीमद्वाल्मीकीयरामायणस्य पाठविधिः

वाल्मीकीयरामायणस्य विविधाः पाठविधयः समुपलभ्यन्ते। श्रीरामसेवाग्रन्थेऽनुष्ठानप्रकाशे स्कान्दोक्ते रामायणमाहात्म्ये बृहद्धर्मपुराणे च पृथक्पृथक् पारायणविधिर्निर्दिष्टः। शङ्कररामानुजमध्वप्रभृतिप्रातःस्मरणीयाचार्यवर्याणां सम्प्रदायेष्वपि नानाविधाः पाठविधयोऽक्षिलक्ष्यीक्रियन्ते। तथापि साधारणं स्वल्पतरमेव चान्तरमेषां विधीनां मिथो दृश्यते। एवमेव वाल्मीकीयरामायणस्यास्यानुष्ठानमपि विविधकामनामूलकतया निष्कामतया च भृशं बेभिद्यतेतराम्। समेषामेषां भेदानामुपरि विस्तरतो विचारस्य नेह निबन्धेऽवकाशोऽतः परां प्रसिद्धिमुपगतस्य वाल्मीकीयरामायणनवाहपारायणस्यैवेह विधिर्निर्दिश्यते—

चैत्रे माघे कार्तिके वा महनीये मासि वलक्षे पक्षे पञ्चम्यास्त्रयोदशीपर्यन्तं नवभिर्दिनै रामायणस्यास्य नवाहपारायणस्य सुमहापुण्यत्वमुद्घुष्यते[१]। कुत्रचित् पुण्यतमे क्षेत्रे तीर्थे देवायतने स्वकीये सदने वा भगवतो महाविष्णोस्तुलसीतरोश्च संनिधाने रामायणपारायणमारम्भणीयम्। तदर्थं च यथासम्भवं कथास्थलं भूमिशोधनमार्जनोपलेपनादिसंस्कारैः संस्कृत्य कदलीस्तम्भस्थापनध्वजारोपणपताकाप्रावरणवितानवितानादिभिरलङ्करणीयम्। कथामण्डपमायामतो विस्तारतश्च षोडशहस्तमितं निर्मापणीयम्। मध्ये चामुष्य मण्डपस्य सर्वतोभद्रमण्डलसमलङ्कृता वेदिकैका विधातव्या। वेदिकान्तरं कुण्डं स्थण्डिलमन्यच्चापितदुपयुक्तमुपकरणं सम्भरणीयम्। मण्डपाभ्यन्तर एव दक्षिणपश्चिमभागयोर्वक्तः श्रोतुश्चासने स्याताम्। वक्तुः सम्मुखे रामायणपुस्तकस्यासनं भवेत्। श्रोतॄणां कृतेऽपि भूमौ सुविस्तृतमासनमास्तरणीयम्। श्रोतृभ्यो वक्तुस्ततश्च ग्रन्थस्यासनमुच्चैर्भवेत्[२]।

ततः कर्ता प्रायश्चित्तं नित्यकृत्यं च निर्वर्त्य भगवतः श्रीरामस्य प्रतिमां स्थापयेत्। अथवा ग्रन्थस्यैवोपरि सीतालक्ष्मणभरतशत्रुघ्नहनुमत्सहितस्य भगवतः श्रीरामचन्द्रस्यावाहनं कुर्यात्। तदनु निखिलोपकरणसमलङ्कृतं पञ्चपल्लवादियुतं कलशं संस्थाप्य स्वस्तिवाचनपूर्वकं गणपतिं वटुकं क्षेत्रपालं योगिनीर्मातृका नवग्रहान् तुलसीं लोकपालान् दिक्पालादींश्च समभ्यर्च्य नान्दीश्राद्धं विधाय सपरिकरं सपरिच्छदं च भगवन्तं श्रीरामं पूजयेत्।

आदौ देशकालौ संकीर्त्य नामगोत्रादि समुच्चार्य—

ॐ भूर्भुवः स्वरोम्। ममोपात्तदुरितक्षयपूर्वकं श्रीसीतारामप्रीत्यर्थं श्रीसीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेतश्रीरामचन्द्रप्रसादसिद्ध्यर्थं च श्रीरामचन्द्रप्रसादेन सर्वभीष्टसिद्ध्यर्थं श्रीरामचन्द्रपूजनमहं करिष्ये। श्रीवाल्मीकीयरामायणस्य पारायणं च करिष्ये, तदङ्गभूतं कलशस्थापनं स्वस्त्ययनपाठं गणपतिपूजनं वटुकक्षेत्रपालयोगिनीमातृकानवग्रह-तुलसीलोकपालदिक्पालादिपूजनं चाहं करिष्ये।

—इति संकल्पं कृत्वा पूजनमारभेत—

ॐ अच्युताय नमः, ॐ अनन्ताय नमः, ॐ गोविन्दाय नमः, ॐ नारायणाय नमः, ॐ मधुसूदनाय नमः, ॐ हृषीकेशाय नमः, ॐ माधवाय नमः, ॐ त्रिविक्रमाय नमः, ॐ दामोदराय नमः, ॐ मुकुन्दाय नमः, ॐ वामनाय नमः, ॐ पद्मनाभाय नमः, ॐ केशवाय नमः, ॐ विष्णवे नमः, ॐ श्रीधराय नमः, ॐ श्रीसीतारामाभ्यां नमः।

एवं नमस्कृत्य वक्ष्यमाणरीत्या पूजयेत्—

श्रीसीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेतं श्रीरामचन्द्रं ध्यायामि।

,, आवाहयामि।

श्रीसीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेताय श्रीरामचन्द्राय नमः—

रत्नसिंहासनं समर्पयामि।

,, पाद्यं समर्पयामि।

,, अर्घ्यं समर्पयामि।

,, स्नानीयं समर्पयामि।

,, आचमनीयं समर्पयामि।

,, वस्त्रं समर्पयामि।

,, यज्ञोपवीताभरणं समर्पयामि।

,, गन्धान् समर्पयामि।

,, अक्षतान् समर्पयामि।

,, पुष्पाणि समर्पयामि।

,, धूपमाघ्रापयामि।

,, दीपं दर्शयामि।

,, नैवेद्यं फलानि च समर्पयामि।

,, ताम्बूलं समर्पयामि।

,, कर्पूरनीराजनं समर्पयामि।

,, छत्रचामरादि समर्पयामि।

,, पुष्पाञ्जलिं समर्पयामि।

,, प्रदक्षिणानमस्कारान् समर्पयामि।

---

१. चैत्रे माघे कार्तिके च सिते पक्षे च वाचयेत् । नवाहं सुमहापुण्यं श्रोतव्यं च प्रयत्नतः ॥
पञ्चम्यां दिनमारभ्य रामायणकथामृतम् । नवाहश्रवणेनैव सर्वपापैः प्रमुच्यते ॥
(रामसेवाग्रन्थे)

२. श्रोतृभ्यश्च तथा वक्तुर्व्यासाद् ग्रन्थस्य चोच्चता। (रामसेवाग्रन्थे)

ततोऽधोऽङ्कितरीत्या पञ्चोपचारैः श्रीरामायणग्रन्थं पूजयेत्—

**ॐ सदा श्रवणमात्रेण पापिनां सद्गतिप्रदे।**
**शुभे रामकथे तुभ्यं गन्धमद्य समर्पये॥**

—इति गन्धं समर्पयामि।

**ॐ बालादिसप्तकाण्डेन सर्वलोकसुखप्रद।**
**रामायण महोदार पुष्पं तेऽद्य समर्पये॥**

—इति पुष्पाणि पुष्पमालां च समर्पयामि।

**ॐ यस्यैकश्लोकपाठस्य फलं सर्वफलाधिकम्।**
**तस्मै रामायणायाद्य दशाङ्गं धूपमर्पये॥**

—इति धूपमाघ्रापयामि।

**ॐ यस्य लोके प्रणेतारो वाल्मीक्यादिमहर्षयः।**
**तस्मै रामचरित्राय घृतदीपं समर्पये॥**

—इति दीपं दर्शयामि।

**ॐ श्रूयते ब्रह्मणो लोके शतकोटिप्रविस्तरम्।**
**रूपं रामायणस्यास्य तस्मै नैवेद्यमर्पये॥**

—इति नैवेद्यं समर्पयामि।

एवं संपूज्य कर्पूरेण नीराजनं विधाय चतुःकृत्वः प्रदक्षिणां कृत्वा पुष्पाञ्जलिमर्पयेत्। ततः साष्टाङ्गं प्रणिपत्य नमस्कुर्यात्—

**वाल्मीकिगिरिसम्भूता रामसागरगामिनी।**
**पुनाति भुवनं पुण्या रामायणमहानदी॥**
**श्लोकसारसमाकीर्णं सर्गकल्लोलसंकुलम्।**
**काण्डग्राहमहामीनं वन्दे रामायणार्णवम्॥**

तदनु ब्राह्मणादीन् सम्पूज्य पाठं संकल्प्य—ऋष्यादीन् न्यसेत्। कामनाभेदेन सम्पूर्णरामायणस्य पाठासम्भवे पृथक्पृथगेकैकस्य काण्डस्य पाठात्मकानुष्ठानस्यापि विधानं दृश्यतेऽनुष्ठानप्रकाशे। तद् यथा—पुत्रकामो बालकाण्डं वाचयेत्, लक्ष्मीकामोऽयोध्याकाण्डं पठेत्। एवमेव नष्टराज्यप्राप्तिमिच्छद्भिः किष्किन्धाकाण्डस्य, सर्वकामानभि-लषद्भिः सुन्दरकाण्डस्य, शत्रुनाशमिच्छद्भिश्च लङ्काकाण्डस्य पाठो विधातव्यः। बृहद्धर्मपुराणेऽन्येषां च कामानां सिद्धये काण्डानामेषां पारायणप्रयोगा दर्शिताः। तादृशाः प्रयोगास्तत्सम्बन्धिन्यासादिप्रकाराश्च पश्चाद् वक्ष्यन्ते।

ॐ अस्य श्रीवाल्मीकिरामायणमहामन्त्रस्य भगवान् वाल्मीकिर्ऋषिः। अनुष्टुप् छन्दः। श्रीरामः परमात्मा देवता। अभयं सर्वभूतेभ्य इति बीजम्। अङ्गुल्यग्रेण तान् हन्यामिति शक्तिः। एतदस्त्रबलं दिव्यमिति कीलकम्। भगवान्नारायणो देव इति तत्त्वम्। धर्मात्मा सत्यसंधश्चेत्यस्त्रम्। पुरुषार्थचतुष्टयसिद्ध्यर्थं पाठे विनियोगः।

ॐ श्रीं रां आपदामपहर्तारमित्यङ्गुष्ठाभ्यां नमः।

ॐ ह्रीं रीं दातारमिति तर्जनीभ्यां नमः। ॐ रों रूं सर्वसम्पदामिति मध्यमाभ्यां नमः।

ॐ श्रीं रैं लोकाभिराममित्यनामिकाभ्यां नमः। ॐ श्रीं रौं श्रीराममिति कनिष्ठिकाभ्यां नमः।

ॐ रौं रः भूयो भूयो नमाम्यहमिति करतलकरपृष्ठाभ्यां नमः।

एवमेव हृदयादिन्यासं कुर्यात्।[१] ततः—

**ब्रह्मा स्वयम्भूर्भगवान् देवाश्चैव तपस्विनः।**
**सिद्धिं दिशन्तु मे सर्वे देवाः सर्षिगणास्त्विह॥**

—इति दिग्बन्धः।

अन्ते च पुनरेवं ध्यायेत्—

**वामे भूमिसुता पुरस्तु हनुमान् पश्चात् सुमित्रासुतः**
**शत्रुघ्नो भरतश्च पार्श्वदलयोर्वाय्वादिकोणेषु च।**
**सुग्रीवश्च विभीषणश्च युवराट् तारासुतो जाम्बवान्**
**मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम्॥**

**सम्पुटमन्त्रः**

**'आपदामपहर्तारं दातारं सर्वसम्पदाम्।**
**लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम्॥'**

—एतेन मन्त्रेण सम्पुटितानां श्लोकानां पाठेन सर्वेषां कामानां सिद्धिः स्यात्।

तदनुवक्ष्यमाणानां[२] मङ्गलश्लोकानां पाठं कृत्वा



---

१. हृदयादिन्यासविधिरेवं बोध्यः—पूर्वोक्ते करन्यासवाक्ये 'अंगुष्ठाभ्यां नमः' इत्यस्य स्थाने 'हृदयाय नमः' इत्युच्चार्य दक्षिणकरस्य पञ्चभिरङ्गुलिभिर्हृदयं स्पृशेत्। 'तर्जनीभ्यां नमः' इत्यस्य स्थाने 'शिरसे स्वाहा' इति परिवर्त्य शिरोऽग्रभागं स्पृशेत्। 'मध्यमाभ्यां नमः' इत्यस्य स्थाने 'शिखायै वषट्' इत्युच्चार्य शिखां स्पृशेत्। 'अनामिकाभ्यां नमः' इत्यस्य स्थाने 'कवचाय हुम्' इत्युक्त्वा दक्षिणेन करेण वामं वामेन करेण च दक्षिणं स्कन्धं स्पृशेत्। 'कनिष्ठिकाभ्यां नमः' इत्यस्य स्थाने 'नेत्रत्रयाय वौषट्' इति कथयित्वा नेत्रद्वयं स्पृशेत्। 'करतलकरपृष्ठाभ्यां नमः' इत्यस्य स्थाने 'अस्त्राय फट्' इत्युक्त्वा वारत्रयं करतले वादयेत्।

२. बृहद्धर्मपुराणोक्तरीत्या रामायणपाठारम्भतः प्राग्रामायणकवचस्यापि पाठः कर्तव्यः स च मङ्गलश्लोकानामपि पाठात् प्रागेव विधातव्यः। प्रतिदिनं न शक्यते चेत् प्रथमदिने त्ववश्यं तस्य पाठः करणीयः।

अथ रामायणकवचम्

ॐ नमोऽष्टादशतत्त्वरूपाय रामायणाय महामन्त्रस्वरूपाय। मा निषादेति मूलं शिरोऽवतु। अनुक्रमणिकाबीजं मुखमवतु। ऋष्यशृङ्गोपाख्यानमृषिजिह्वामवतु। जानकीलाभोऽनुष्टुप्छन्दोऽवतु गलम्। केकय्याज्ञा देवता हृदयमवतु। सीतालक्ष्मणानुगमनश्रीरामहर्षः प्रमाणं जठरमवतु। भगवद्भक्तिः शक्तिरवतु मे मध्यम्। शक्तिमान् धर्मो मुनीनां पालनं ममोरू रक्षतु। मारीचवचनं प्रतिपालनमवतु पादौ। सुग्रीवमैत्रमर्थोऽवतु स्तनौ। निर्णयो हनुमच्चेष्टावतु बाहू। कर्ता सम्पातिपक्षोद्गमोऽवतु स्कन्धौ। प्रयोजनं विभीषणराज्यं ग्रीवां ममावतु। रावणवधः स्वरूपमवतु कर्णौ। सीतोद्धारो लक्षणमवतु नासिके। अमोघस्तव संस्तवोऽवतु जीवात्मानम्। नयः काललक्ष्मणसंवादोऽवतु नाभिम्। आचरणीयं श्रीरामादिधर्मं सर्वाङ्गं ममावतु। इति रामायणकवचम्। (बृहद्धर्मपुराणे पूर्वखण्डे २५ तमोऽध्यायः)

रामायणपाठमारभेत—

### गणपतिध्यानम्

शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम्।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये॥ १॥
वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम्॥ २॥

### गुरुवन्दना

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः।
गुरुः साक्षात् परं ब्रह्म तस्मै श्रीगुरवे नमः॥
अखण्डमण्डलाकारं व्याप्तं येन चराचरम्।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः॥

### सरस्वतीस्मरणम्

दोर्भिर्युक्ता चतुर्भिः स्फटिकमणिमयीमक्षमालां दधाना
हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकं चापरेण।
भासा कुन्देन्दुशङ्खस्फटिकमणिनिभा भासमानासमाना
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना॥

### वाल्मीकिवन्दना

कूजन्तं राम रामेति मधुरं मधुराक्षरम्।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम्॥
यः पिबन् सततं रामचरितामृतसागरम्।
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम्॥

### हनुमन्नमस्कारः

गोष्पदीकृतवारीशं मशकीकृतराक्षसम्।
रामायणमहामालारत्नं वन्देऽनिलात्मजम्॥
अञ्जनानन्दनं वीरं जानकीशोकनाशनम्।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम्॥
उल्लङ्घ्य सिन्धोः सलिलं सलीलं
यः शोकवह्निं जनकात्मजायाः।
आदाय तेनैव ददाह लङ्कां
नमामि तं प्राञ्जलिराञ्जनेयम्॥
आञ्जनेयमतिपाटलाननं
काञ्चनाद्रिकमनीयविग्रहम्।
पारिजाततरुमूलवासिनं
भावयामि पवमाननन्दनम्॥
यत्र यत्र रघुनाथकीर्तनं
तत्र तत्र कृतमस्तकाञ्जलिम्।
बाष्पवारिपरिपूर्णलोचनं
मारुतिं नमत राक्षसान्तकम्॥
मनोजवं मारुततुल्यवेगं
जितेन्द्रियं बुद्धिमतां वरिष्ठम्।
वातात्मजं वानरयूथमुख्यं
श्रीरामदूतं शिरसा नमामि॥

### श्रीरामध्यानक्रमः

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्येपुष्पकमासने मणिमये वीरासने संस्थितम्।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम्॥
वामे भूमिसुता पुरस्तु हनुमान् पश्चात् सुमित्रासुतः
शत्रुघ्नो भरतश्च पार्श्वदलयोर्वाय्वादिकोणेषु च।
सुग्रीवश्च विभीषणश्च युवराट् तारासुतो जाम्बवान्
मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम्॥

### श्रीरामपरिकरनमस्कारः

रामं रामानुजं सीतां भरतं भरतानुजम्।
सुग्रीवं वायुसूनुं च प्रणमामि पुनः पुनः॥
नमोऽस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः॥

### रामायणनमस्कारः

चरितं रघुनाथस्य शतकोटिप्रविस्तरम्।
एकैकमक्षरं पुंसां महापातकनाशनम्॥
वाल्मीकिगिरिसम्भूता रामाम्भोनिधिसंगता।
श्रीमद्रामायणी गङ्गा पुनाति भुवनत्रयम्॥
वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः।
शृण्वन् रामकथानादं को न याति परां गतिम्॥

पाठमारभ्य सर्गमेकं समाप्यैव विरमेत्, सर्गमध्ये पाठविरामो न विधातव्यः। सर्गस्य मध्ये पाठोऽवरुद्धश्चेत् स्यात् तदा पुनः सर्गस्यारम्भादेव पाठः प्रारम्भणीयः। मध्यमस्वरेण सुस्पष्टमुच्चार्य श्रद्धया प्रीत्या च रामायणस्य पाठः करणीयः। गीतिना शिरःकम्पिना शीघ्रकारिणा अर्थमजानता च नैव पाठो विधातव्यः। संध्याकाले प्रत्यहं निम्ननिर्दिष्टेषु स्थलेषु पाठविश्रामः कर्तव्यः।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| प्रथम | दिने | अयोध्याकाण्डस्य | ६ | सर्गस्य | समाप्तौ | प्रथमो | विश्रामः |
| द्वितीय | ,, | ,, ,, | ८० | ,, | ,, | द्वितीयो | ,, |
| तृतीय | ,, | अरण्यकाण्डस्य | २० | ,, | ,, | तृतीयो | ,, |
| चतुर्थ | ,, | किष्किन्धाकाण्डस्य | ४६ | ,, | ,, | चतुर्थो | ,, |
| पञ्चम | ,, | सुन्दरकाण्डस्य | ४७ | ,, | ,, | पञ्चमो | ,, |
| षष्ठ | ,, | युद्धकाण्डस्य | ५० | ,, | ,, | षष्ठो | ,, |
| सप्तम | ,, | ,, ,, | ९९ | ,, | ,, | सप्तमो | ,, |
| अष्टम | ,, | उत्तरकाण्डस्य | ३६ | ,, | ,, | अष्टमो | ,, |

नवम ,, ,, ,, अन्त्यसर्गस्य पाठानन्तरं पुनर्युद्धकाण्डस्यान्तिमं सर्गं पठित्वा विश्रामः कर्तव्यः।*

* प्रथमे तु अयोध्यायाः षट्सर्गान्ते शुभा स्थितिः। तस्यैवाशीतिसर्गान्ते द्वितीये दिवसे स्थितिः॥
तथा विंशतिसर्गान्ते चारण्यस्य तृतीयके। दिने चतुर्थे षट्चत्वारिंशत्सर्गे कथास्थितिः॥

अन्यान्यपि विश्रामस्थलानि सन्ति। एकस्त्वेतादृशोऽपि पाठक्रमो दृश्यते यत्र नोत्तरकाण्डस्य पाठः क्रियते। तस्य विश्रामस्थलानि क्रमशो निर्दिश्यन्ते—

| | | | | |
|---|---|---|---|---|
| प्रथमदिवसे | बालकाण्डस्य | ७७ | सर्गस्य | समाप्तौ |
| द्वितीय ,, | अयोध्याकाण्डस्य | ६० | ,, | ,, |
| तृतीय ,, | ,, | ११९ | ,, | ,, |
| चतुर्थ ,, | अरण्यकाण्डस्य | ६८ | ,, | ,, |
| पञ्चम ,, | किष्किन्धाकाण्डस्य | ४९ | ,, | ,, |
| षष्ठ ,, | सुन्दरकाण्डस्य | ५६ | ,, | ,, |
| सप्तम ,, | युद्धकाण्डस्य | ५० | ,, | ,, |
| अष्टम ,, | ,, | १११ | ,, | ,, |
| नवम ,, | ,, | १२८ | ,, | ,, |

प्रतिदिनं कथासमापनकालेनिम्नाङ्कितश्लोकैर्मङ्गलाशासनं कृत्वा पारायणं पूरयेत्।

**स्वस्ति प्रजाभ्यः परिपालयन्तां**
**न्याय्येन मार्गेण महीं महीशाः।**
**गोब्राह्मणेभ्यः शुभमस्तु नित्यं**
**लोकाः समस्ताः सुखिनो भवन्तु॥**
**काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी।**
**देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः॥**
**अपुत्राः पुत्रिणः सन्तु पुत्रिणः सन्तु पौत्रिणः।**
**अधनाः सधनाः सन्तु जीवन्तु शरदां शतम्॥**
**चरितं रघुनाथस्य शतकोटिप्रविस्तरम्।**
**एकैकमक्षरं प्रोक्तं महापातकनाशनम्॥**
**शृण्वन् रामायणं भक्त्या यः पादं पदमेव वा।**
**स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा॥**
**रामाय रामभद्राय रामचन्द्राय वेधसे।**
**रघुनाथाय नाथाय सीतायाः पतये नमः॥**
**यन्मङ्गलं सहस्राक्षे सर्वदेवनमस्कृते।**
**वृत्रनाशे समभवत् तत् ते भवतु मङ्गलम्॥**
**यन्मङ्गलं सुपर्णस्य विनताकल्पयत् पुरा।**
**अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गलम्॥**
**मङ्गलं कोसलेन्द्राय महनीयगुणात्मने।**
**चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम्॥**
**अमृतोत्पादने दैत्यान् घ्नतो वज्रधरस्य यत्।**
**अदितिर्मङ्गलं प्रादात् तत् ते भवतु मङ्गलम्॥**
**त्रीन् विक्रमान् प्रक्रमतो विष्णोरमिततेजसः।**
**यदासीन्मङ्गलं राम तत् ते भवतु मङ्गलम्॥**
**ऋषयः सागरा द्वीपा वेदा लोका दिशश्च ते।**
**मङ्गलानि महाबाहो दिशन्तु तव सर्वदा॥**
**कायेन वाचा मनसेन्द्रियैर्वा**
**बुद्ध्याऽऽत्मना वा प्रकृतिस्वभावात्।**
**करोमि यद् यत् सकलं परस्मै**
**नारायणायेति समर्पये तत्॥**

सकामपाठे* पृथक्पृथगेकैकस्य काण्डस्य विनियोग ऋष्यादिन्यासश्चैवं बोध्यः—

**बालकाण्डस्य विनियोगः**

ॐ अस्य श्रीबालकाण्डमहामन्त्रस्य ऋष्यशृङ्गः ऋषिः। अनुष्टुप् छन्दः। दाशरथिः परमात्मा देवता। रां बीजम्। नमः शक्तिः। रामायेति कीलकम्। श्रीरामप्रीत्यर्थे बालकाण्डपारायणे विनियोगः।

---

किष्किन्धाख्यस्य काण्डस्य पाठविद्भिरुदाहृता। सुसप्तचत्वारिंशत्के सर्गान्ते सुन्दरे स्थितिम्॥
पञ्चमे दिवसे कुर्यादथ षष्ठे तथोच्यते। युद्धकाण्डस्य पञ्चाशत्सर्गान्ते विमला स्थितिः॥
एकोनशतसंख्याके सर्गान्ते सप्तमे दिने। युद्धस्यैव तु काण्डस्य विश्रामः सम्प्रकीर्तितः॥
तथा चोत्तरकाण्डस्य षट्त्रिंशत्सर्गपूरणे। अष्टमे दिवसे कृत्वा स्थितिं च नवमे दिने॥
शेषं समाप्य युद्धस्य चान्त्यं सर्गं पुनः पठेत्। रामराज्यकथा यस्मिन् सर्ववाञ्छितदायिनी॥
एवं पाठक्रमः पूर्वैराचार्यैश्च विनिर्मितः।

(अनुष्ठानप्रकाशे)

* बृहद्धर्मपुराणे पृथक्पृथक् काण्डपाठप्रयोजनमेवं प्रतिपाद्यते।
अनावृष्टिर्महापीडाग्रहपीडाप्रपीडिताः। आदिकाण्डं पठेयुर्ये ते मुच्यन्ते ततो भयात्॥
पुत्रजन्मविवाहादौ गुरुदर्शन एव च। पठेच्च शृणुयाच्चैव द्वितीयं काण्डमुत्तमम्॥
वने राजकुले वह्निजलपीडायुतो नरः। पठेदारण्यकं काण्डं शृणुयाद् वा स मङ्गली॥
मित्रलाभे तथा नष्टद्रव्यस्य च गवेषणे। श्रुत्वा पठित्वा कैष्किन्ध्यं काण्डं तत्तत् फलं लभेत्॥
श्राद्धेषु देवकार्येषु पठेत् सुन्दरकाण्डकम्। शत्रोर्जये समुत्साहे जनवादे विगर्हिते॥
लङ्काकाण्डं पठेत् किं वा शृणुयात् स सुखी भवेत्।
यः पठेच्छृणुयाद् वापि काण्डमभ्युदयोत्तरम्। आनन्दकार्ये यात्रायां स जयी परतोऽत्र च॥
मोक्षार्थी लभते मोक्षं भक्त्यर्थी भक्तिमेव च। ज्ञानार्थी लभते ज्ञानं ब्रह्मतत्त्वोपलम्भकम्॥

(बृहद्धर्मपुराणे पूर्वखण्डे अध्यायः २६। ९—१५)

**अथ ऋष्यादिन्यासः**

ॐ ऋष्यशृङ्गऋषये नमः शिरसि। ॐ अनुष्टुप्छन्दसे नमः मुखे। ॐ दाशरथिपरमात्मदेवतायै नमः हृदि। ॐ रां बीजाय नमः गुह्ये। ॐ नमः शक्तये नमः पादयोः। ॐ रामाय कीलकाय नमः सर्वाङ्गे।

**करन्यासः**

ॐ सुप्रसन्नाय अङ्गुष्ठाभ्यां नमः। ॐ शान्तमनसे तर्जनीभ्यां नमः। ॐ सत्यसन्धाय मध्यमाभ्यां नमः। ॐ जितेन्द्रियाय अनामिकाभ्यां नमः। ॐ धर्मज्ञाय नयसारज्ञाय कनिष्ठिकाभ्यां नमः। ॐ राज्ञे दाशरथये जयिने करतलकरपृष्ठाभ्यां नमः।

एभिरेव मन्त्रैः पूर्वोक्तरीत्या हृदयादिन्यासं कृत्वा निम्नाङ्कितं श्लोकमनुसृत्य ध्यानं कुर्यात्—

**श्रीराममाश्रितजनामरभूरुहेश-**
**मानन्दशुद्धमखिलामरवन्दिताङ्घ्रिम्।**
**सीताङ्गनासुमिलितं सततं सुमित्रा-**
**पुत्रान्वितं धृतधनुःशरमादिदेवम्॥**

तदनु—

**ॐ सुप्रसन्नः शान्तमनाः सत्यसंधो जितेन्द्रियः।**
**धर्मज्ञो नयसारज्ञो राजा दाशरथिर्जयी॥**

एतेन मन्त्रेण श्रीरामं पूजयेत्। पुनरेतेनैव श्रीराममन्त्रेण वा प्रतिश्लोकं सम्पुटीकरणपूर्वकं बालकाण्डस्य पारायणं कुर्यात्। एतेन ग्रहाणां शान्तिरीतिभीतिनिवारणं पुत्रप्राप्तिश्च स्यात्।

**अयोध्याकाण्डस्य विनियोग ऋष्यादिन्यासश्च**

ॐ अस्य श्रीअयोध्याकाण्डमहामन्त्रस्य भगवान् वसिष्ठ ऋषिः। अनुष्टुप् छन्दः। भरतो दाशरथिः परमात्मा देवता। भं बीजम्। नमः शक्तिः। भरतायेति कीलकम्। मम भरत-प्रसादसिद्ध्यर्थमयोध्याकाण्डपारायणे विनियोगः। ॐ वसिष्ठऋषये नमः शिरसि। ॐ अनुष्टुप्छन्दसे नमः मुखे। ॐ दाशरथिभरतपरमात्मदेवतायै नमः हृदि। ॐ भं बीजाय नमः गुह्ये। ॐ नमः शक्तये नमः पादयोः। ॐ भरताय कीलकाय नमः सर्वाङ्गे।

**करन्यासः**

ॐ भरताय नमस्तस्मै—अङ्गुष्ठाभ्यां नमः। ॐ सारज्ञाय तर्जनीभ्यां नमः। ॐ महात्मने मध्यमाभ्यां नमः। ॐ तापसाय अनामिकाभ्यां नमः। ॐ अतिशान्ताय कनिष्ठिकाभ्यां नमः। ॐ शत्रुघ्नसहिताय च करतलकरपृष्ठाभ्यां नमः।

एवमेव हृदयादिन्यासं कृत्वा ध्यानं कुर्यात्—

**श्रीरामपादद्वयपादुकान्तसंसक्तचित्तं कमलायताक्षम्।**
**श्यामं प्रसन्नवदनं कमलावदातशत्रुघ्नयुक्तमनिशं भरतं नमामि॥**

ततस्तु—

**भरताय नमस्तस्मै सारज्ञाय महात्मने।**
**तापसायातिशान्ताय शत्रुघ्नसहिताय च॥**

इति मन्त्रेण पञ्चोपचारैर्भरतं पूजयेत्। इच्छेच्चेदनेनैव मन्त्रेण प्रतिश्लोकं सम्पुटीकृत्यायोध्याकाण्डस्य पाठं लक्ष्मीप्राप्तीच्छया कुर्यात्।

**अरण्यकाण्डस्य विनियोगं ऋष्यादिन्यासश्च**

ॐ अस्य श्रीमदरण्यकाण्डमहामन्त्रस्य भगवानृषिः। अनुष्टुप् छन्दः। श्रीरामो दाशरथिः परमात्मा महेन्द्रो देवता। ईं बीजम्। नमः शक्तिः। इन्द्रायेति कीलकम्। इन्द्रप्रसादसिद्ध्यर्थे अरण्यकाण्डपारायणे जपे विनियोगः। ॐ भगवदृषये नमः शिरसि। ॐ अनुष्टुप्छन्दसे नमः मुखे। ॐ दाशरथिश्रीरामपरमात्ममहेन्द्रदेवतायै नमः हृदि। ॐ ईं बीजाय नमः गुह्ये। ॐ नमः शक्तये नमः पादयोः। ॐ इन्द्राय कीलकाय नमः सर्वाङ्गे।

**करन्यासः**

ॐ सहस्रनयनाय अङ्गुष्ठाभ्यां नमः। ॐ देवाय तर्जनीभ्यां नमः। ॐ सर्वदेवनमस्कृताय मध्यमाभ्यां नमः। ॐ दिव्यवज्रधराय अनामिकाभ्यां नमः। ॐ महेन्द्राय कनिष्ठिकाभ्यां नमः। ॐ शचीपतये करतलकरपृष्ठाभ्यां नमः।

एवमेव हृदयादिन्यासं कृत्वा ध्यानं कुर्यात्—

**शचीपतिं सर्वसुरेशवन्द्यं सर्वार्तिहर्तारमचिन्त्यशक्तिम्।**
**श्रीरामसेवानिरतं महान्तं वन्दे महेन्द्रं धृतवज्रमीड्यम्॥**

पुनश्च—

**सहस्रनयनं देवं सर्वदेवनमस्कृतम्।**
**दिव्यवज्रधरं वन्दे महेन्द्रं च शचीपतिम्॥**

इति मन्त्रेणेन्द्रं पूजयेत्। नष्टद्रव्यप्राप्त्यादिकामनया त्वेतेनैव सम्पुटीकरणपूर्वकमरण्यकाण्डं पठेत्।

**किष्किन्धाकाण्डस्य विनियोग ऋष्यादिन्यासश्च**

ॐ अस्य श्रीकिष्किन्धाकाण्डमहामन्त्रस्य भगवान् ऋषिः। अनुष्टुप् छन्दः। सुग्रीवो देवता। सु बीजम्। नमः शक्तिः। सुग्रीवेति कीलकम्। मम सुग्रीवप्रसादसिद्ध्यर्थे किष्किन्धाकाण्डपारायणे विनियोगः। ॐ भगवदृषये नमः शिरसि। ॐ अनुष्टुप्छन्दसे नमः मुखे। ॐ सुग्रीवदेवतायै नमः हृदये। ॐ सुं बीजाय नमः गुह्ये। ॐ नमः शक्तये नमः पादयोः। ॐ सुग्रीवाय कीलकाय नमः सर्वाङ्गे।

**करन्यासः**

ॐ सुग्रीवाय अङ्गुष्ठाभ्यां नमः। ॐ सूर्यतनयाय तर्जनीभ्यां नमः। ॐ सर्ववानरपुङ्गवाय मध्यमाभ्यां नमः। ॐ बलवते अनामिकाभ्यां नमः। ॐ राघवसखाय कनिष्ठिकाभ्यां नमः। ॐ वशी राज्यं प्रयच्छतु इति करतलकरपृष्ठाभ्यां नमः।

एतैरेव मन्त्रैर्हृदयादिन्यासं कृत्वा ध्यानं कुर्यात्—

**सुग्रीवमर्कतनयं कपिवर्यवन्द्य-**
**मारोपिताच्युतपदाम्बुजमादरेण।**

**पाणिप्रहारकुशलं बलपौरुषाढ्य-**
**माशास्यदास्यनिपुणं हृदि भावयामि॥**

तदनु 'सुं सुग्रीवाय नमः' इति मन्त्रेण—

**सुग्रीवः सूर्यतनयः सर्ववानरपुङ्गवः।**
**बलवान् राघवसखा वशी राज्यं प्रयच्छतु॥**

इति मन्त्रेण वा सुग्रीवं सम्पूज्य सत्यामिच्छायामेतेनैव सम्पुटीकरणपूर्वकं किष्किन्धाकाण्डं पठेत्।

**सुन्दरकाण्डस्य विनियोग ऋष्यादिन्यासश्च**

ॐ अस्य श्रीमत्सुन्दरकाण्डमहामन्त्रस्य भगवान् हनुमान् ऋषिः। अनुष्टुप् छन्दः। श्रीजगन्माता सीता देवता। श्रीं बीजम्। स्वाहा शक्तिः। सीतायै कीलकम्। सीताप्रसादसिद्ध्यर्थं सुन्दरकाण्डपारायणे विनियोगः। ॐ भगवद्धनुमदृषये नमः शिरसि। अनुष्टुप्छन्दसे नमः मुखे। श्रीजगन्मातृसीतादेवतायै नमः हृदि। श्रीं बीजाय नमः गुह्ये। स्वाहाशक्तये नमः पादयोः। सीतायै कीलकाय नमः सर्वाङ्गे।

**करन्यासः**

ॐ सीतायै अङ्गुष्ठाभ्यां नमः। ॐ विदेहराजसुतायै तर्जनीभ्यां नमः। ॐ रामसुन्दर्यै मध्यमाभ्यां नमः। ॐ हनुमता समाश्रितायै अनामिकाभ्यां नमः। ॐ भूमिसुतायै कनिष्ठिकाभ्यां नमः। ॐ शरणं भजे करतलकरपृष्ठाभ्यां नमः।

तदन्वेतैरेव मन्त्रैर्हृदयादिन्यासं कृत्वा ध्यानं कुर्यात्—

**सीतामुदारचरितां विधिसाम्बविष्णु-**
**वन्द्यां त्रिलोकजननीं शतकल्पवल्लीम्।**
**हेमैरनेकमणिरञ्जितकोटिभागै-**
**र्भूषाचयैरनुदिनं सहितां नमामि॥**

सुन्दरकाण्डस्य पाठायैष विशिष्टो विधिरस्ति—प्रथमदिने सर्गस्यैकस्य पाठं कुर्यात्। तदनु द्वितीयदिनादारभ्य प्रत्यहमेकैकसर्गवृद्धिपूर्वकं पाठं पूरयेत्। तथाहि—प्रथमदिने प्रथमसर्गस्य, द्वितीयदिने द्वितीयस्य तृतीयस्य चेति द्वयोः सर्गयोः, तृतीये दिने त्रयाणां चतुर्थे दिने चतुर्णां सर्गाणां पाठं कुर्यात्, वृद्धिक्रमेणैकादशे दिवसे षट्षष्टितमं सर्गं पूरयेत्। द्वादशे दिनेऽवशिष्टसर्गद्वयसहितमादितः सर्गदशकं पठेत्। तदनु त्रयोदशे दिने एकादशसर्गत आरभ्य त्रयोविंशतितमसर्गपर्यन्तं पठेत्। एवं प्रत्यहमेकवृद्ध्या पठन् सुन्दरकाण्डस्यावृत्तित्रयं पूरयेत्। एतेन सर्वेषां मनोरथानां सिद्धिः स्यात्। अपरः क्रमस्त्वेवं बोध्यः—प्रत्यहं सुन्दरकाण्डस्य पञ्चसर्गान् पठेत्। एवं त्रयोदशे दिने पञ्चषष्टितमसर्गपर्यन्तं पठित्वा चतुर्दशे दिवसेऽवशिष्टसर्गत्रयसहितमादिमं सर्गद्वयं पठेत्। अत्र पाठे सम्पुटमन्त्रस्तु 'श्रीसीतायै नमः'* इति।

**लङ्काकाण्डस्य विनियोग ऋष्यादिन्यासश्च**

ॐ अस्य श्रीयुद्धकाण्डमहामन्त्रस्य विभीषण ऋषिः। अनुष्टुप् छन्दः। विधाता देवता। बं बीजम्। नमः शक्तिः। विधातेति कीलकम्। श्रीधातृप्रसादसिद्ध्यर्थे युद्धकाण्डपारायणे विनियोगः। ॐ विभीषणऋषये नमः शिरसि। ॐ अनुष्टुप्छन्दसे नमः मुखे। ॐ विधातृदेवतायै नमः हृदि। ॐ बं बीजाय नमः गुह्ये। ॐ नमः शक्तये नमः पादयोः। ॐ विधातेति कीलकाय नमः सर्वाङ्गे।

**करन्यासः**

ॐ विधात्रे नमः अङ्गुष्ठाभ्यां नमः। ॐ महादेवाय तर्जनीभ्यां नमः। ॐ भक्तानामभयप्रदाय मध्यमाभ्यां नमः। ॐ सर्वदेवप्रीतिकराय अनामिकाभ्यां नमः। ॐ भगवत्प्रियाय कनिष्ठिकाभ्यां नमः। ॐ ईश्वराय करतलकरपृष्ठाभ्यां नमः।

एवमेव हृदयादिन्यासं कृत्वा ध्यानं कुर्यात्—

**देवं विधातारमनन्तवीर्यं भक्ताभयं श्रीपरमादिदेवम्।**
**सर्वामरप्रीतिकरं प्रशान्तं वन्दे सदा भूतपतिं सुभूतिम्॥**

ततश्च—

**विधातारं महादेवं भक्तानामभयप्रदम्।**
**सर्वदेवप्रीतिकरं भगवत्प्रियमीश्वरम्॥**

इति मन्त्रेण पञ्चोपचारैः पूजनं विधाय यथाकाममेतेनैव सम्पुटीकरणपूर्वकं लङ्काकाण्डश्लोकान् पठेत्। एतेन शत्रूणामुपरि विजयो लभ्यते साधकस्याप्रतिष्ठा च विनिवर्तते।

पुनर्वसुनक्षत्रादारभ्यार्द्रापर्यन्तं सप्तविंशतिदिनैरपि सम्पूर्णरामायणपारायणस्य विधानमुपलभ्यते। चत्वारिंशद्भिर्दिनैरपि चास्यैकं पारायणं पूर्यते। आश्विनचैत्रयोर्नवरात्रावसरेऽपि रामायणनवाहपाठस्य नियमो दृश्यते।

---

* रामभद्र महेष्वास रघुवीर नृपोत्तम। भो दशास्यान्तकास्माकं रक्षां देहि श्रियं च ते॥
—एतेन मन्त्रेणापि सम्पुटितश्लोकस्य सुन्दरकाण्डस्य पाठो विधीयते।

॥ श्रीसीतारामचन्द्राभ्यां नमः ॥

# श्रीमद्वाल्मीकीयरामायणमाहात्म्यम्

## प्रथमोऽध्यायः

### कलिवृत्तवर्णनं कलिकाले मनुष्याणामुद्धारोपायो रामायणस्य पाठः श्रवणं च रामायणमहिमा तच्छ्रवणायोत्तमकालादेर्वर्णनं च

श्रीरामः शरणं समस्तजगतां
रामं विना का गती
रामेण प्रतिहन्यते कलिमलं
रामाय कार्यं नमः।
रामात् त्रस्यति कालभीमभुजगो
रामस्य सर्वं वशे
रामे भक्तिरखण्डिता भवतु मे
राम त्वमेवाश्रयः*। १
चित्रकूटालयं राममिन्दिरानन्दमन्दिरम्।
वन्दे च परमानन्दं भक्तानामभयप्रदम्। २
ब्रह्मविष्णुमहेशाद्या यस्यांशा लोकसाधकाः।
नमामि देवं चिद्रूपं विशुद्धं परमं भजे। ३

*ऋषय ऊचुः*

भगवन् सर्वमाख्यातं यत् पृष्टं विदुषा त्वया।
संसारपाशबद्धानां दुःखानि सुबहूनि च। ४
एतत्संसारपाशस्यच्छेदकः कतमः स्मृतः।
कलौ वेदोक्तमार्गाश्च नश्यन्तीति त्वयोदिताः। ५
अधर्मनिरतानां च यातनाश्च प्रकीर्तिताः।
घोरे कलियुगे प्राप्ते वेदमार्गबहिष्कृते। ६
पाखण्डत्वं प्रसिद्धं वै सर्वैश्च परिकीर्तितम्।
कामार्त्ता ह्रस्वदेहाश्च लुब्धा अन्योन्यतत्पराः। ७
कलौ सर्वे भविष्यन्ति स्वल्पायुर्बहुपुत्रकाः।
स्त्रियः स्वपोषणपरा वेश्याचरणतत्पराः। ८
पतिवाक्यमनादृत्य सदान्यगृहतत्पराः।
दुःशीलेषु करिष्यन्ति पुरुषेषु सदा स्पृहाम्। ९
असद्वार्त्ता भविष्यन्ति पुरुषेषु कुलाङ्गनाः।
परुषानृतभाषिण्यो देहसंस्कारवर्जिताः। १०
वाचालाश्च भविष्यन्ति कलौ प्रायेण योषितः।
भिक्षवश्चापि मित्रादिस्नेहसम्बन्धयन्त्रिताः। ११
अन्नोपाधिनिमित्तेन शिष्यान् बध्नन्ति लोलुपाः।
उभाभ्यामपि पाणिभ्यां शिरःकण्डूयनं स्त्रियः। १२
कुर्वन्त्यो गृहभर्तॄणामाज्ञां भेत्स्यन्त्यतन्द्रिताः।
पाखण्डालापनिरताः पाखण्डजनसङ्गिनः। १३
यदा द्विजा भविष्यन्ति तदा वृद्धिं गतः कलिः।
घोरे कलियुगे ब्रह्मन् जनानां पापकर्मिणाम्। १४
मनःशुद्धिविहीनानां निष्कृतिश्च कथं भवेत्।
यथा तुष्यति देवेशो देवदेवो जगद्गुरुः। १५
ततो वदस्व सर्वज्ञ सूत धर्मभृतां वर।
वद सूत मुनिश्रेष्ठ सर्वमेतदशेषतः। १६
कस्य नो जायते तुष्टिः सूत त्वद्वचनामृतात्। १७

*सूत उवाच*

शृणुध्वमृषयः सर्वे यदिष्टं वो वदाम्यहम्।
गीतं सनत्कुमाराय नारदेन महात्मना। १८
रामायणं महाकाव्यं सर्ववेदेषु सम्मतम्।
सर्वपापप्रशमनं दुष्टग्रहनिवारणम्। १९
दुःस्वप्ननाशनं धन्यं भुक्तिमुक्तिफलप्रदम्।
रामचन्द्रकथोपेतं सर्वकल्याणसिद्धिदम्। २०
धर्मार्थकाममोक्षाणां हेतुभूतं महाफलम्।
अपूर्वं पुण्यफलदं शृणुध्वं सुसमाहिताः। २१
महापातकयुक्तो वा युक्तो वा सर्वपातकैः।
श्रुत्वैतदार्षं दिव्यं हि काव्यं शुद्धिमवाप्नुयात्। २२
रामायणेन वर्तन्ते सुतरां ये जगद्धिताः।
त एव कृतकृत्याश्च सर्वशास्त्रार्थकोविदाः। २३
धर्मार्थकाममोक्षाणां साधनं च द्विजोत्तमाः।
श्रोतव्यं च सदा भक्त्या रामायणपरामृतम्। २४
पुरार्जितानि पापानि नाशमायान्ति यस्य वै।
रामायणे महाप्रीतिस्तस्य वै भवति ध्रुवम्। २५

* अस्मिञ्छ्लोके सम्बोधनसहितासु सर्वासु विभक्तिषु रामशब्दस्यैकवचनान्तरूपाणि सम्प्रयुक्तानि।

रामायणे वर्तमाने पापपाशेन यन्त्रितः।
अनादृत्य असद्गाथासक्तबुद्धिः प्रवर्तते।२६
रामायणं नाम परं तु काव्यं
सुपुण्यदं वै शृणुत द्विजेन्द्राः।
यस्मिञ्छ्रुते जन्मजरादिनाशो
भवत्यदोषः स नरोऽच्युतः स्यात्।२७
वरं वरेण्यं वरदं तु काव्यं
संतारयत्याशु च सर्वलोकम्।
संकल्पितार्थप्रदमादिकाव्यं
श्रुत्वा च रामस्य पदं प्रयाति।२८
ब्रह्मेशविष्ण्वाख्यशरीरभेदै-
र्विश्वं सृजत्यत्ति च पाति यश्च।
तमादिदेवं परमं वरेण्य-
माधाय चेतस्युपयाति मुक्तिम्।२९
यो नामजात्यादिविकल्पहीनः
परावराणां परमः परः स्यात्।
वेदान्तवेद्यः स्वरुचा प्रकाशः
स वीक्ष्यते सर्वपुराणवेदैः।३०
ऊर्जे माघे सिते पक्षे चैत्रे च द्विजसत्तमाः।
नवाह्ना खलु श्रोतव्यं रामायणकथामृतम्।३१
इत्येवं शृणुयाद् यस्तु श्रीरामचरितं शुभम्।
सर्वान् कामानवाप्नोति परत्रामुत्र चोत्तमान्।३२
त्रिसप्तकुलसंयुक्तः सर्वपापविवर्जितः।
प्रयाति रामभवनं यत्र गत्वा न शोचते।३३
चैत्रे माघे कार्तिके च सिते पक्षे च वाचयेत्।
नवाहस्सु महापुण्यं श्रोतव्यं च प्रयत्नतः।३४
रामायणमादिकाव्यं स्वर्गमोक्षप्रदायकम्।
तस्माद् घोरे कलियुगे सर्वधर्मबहिष्कृते।३५
नवभिर्दिनैः श्रोतव्यं रामायणकथामृतम्।
रामनामपरा ये तु घोरे कलियुगे द्विजाः।३६
त एव कृतकृत्याश्च न कलिर्बाधते हि तान्।
कथा रामायणस्यापि नित्यं भवति यद्गृहे।३७
तद् गृहं तीर्थरूपं हि दुष्टानां पापनाशनम्।
तावत्पापानि देहेऽस्मिन् निवसन्ति तपोधनाः।३८
यावन्न श्रूयते सम्यक् श्रीमद्रामायणं नरैः।
दुर्लभैव कथा लोके श्रीमद्रामायणोद्भवा।३९
कोटिजन्मसमुत्थेन पुण्येनैव तु लभ्यते।
ऊर्जे माघे सिते पक्षे चैत्रे च द्विजसत्तमाः।४०
यस्य श्रवणमात्रेण सौदासोऽपि विमोचितः।
गौतमशापतः प्राप्तः सौदासो राक्षसीं तनुम्।४१
रामायणप्रभावेण विमुक्तिं प्राप्तवान् पुनः।
यस्त्वेतच्छृणुयाद् भक्त्या रामभक्तिपरायणः।४२
स मुच्यते महापापैः पुरुषः पातकादिभिः।४३

इति श्रीस्कन्दपुराणे उत्तरखण्डे नारदसनत्कुमारसंवादे रामायणमाहात्म्ये कल्पानुकीर्तनं नाम प्रथमोऽध्यायः॥ १॥

# द्वितीयोऽध्यायः

## नारदसनत्कुमारसंवादः सुदासापरनाम्नः सोमदत्तस्य ब्राह्मणस्य राक्षसत्वप्राप्ती रामायणकथाश्रवणेन तस्योद्धारश्च

*ऋषय ऊचुः*

कथं सनत्कुमाराय देवर्षिर्नारदो मुनिः।
प्रोक्तवान् सकलान् धर्मान् कथं तौ मिलितावुभौ। १
कस्मिन् क्षेत्रे स्थितौ तात तावुभौ ब्रह्मवादिनौ।
यदुक्तं नारदेनास्मै तत् त्वं ब्रूहि महामुने। २

*सूत उवाच*

सनकाद्या महात्मानो ब्रह्मणस्तनयाः स्मृताः।
निर्ममा निरहंकाराः सर्वे ते ह्यूर्ध्वरेतसः। ३
तेषां नामानि वक्ष्यामि सनकश्च सनन्दनः।
सनत्कुमारश्च तथा सनातन इति स्मृतः। ४
विष्णुभक्ता महात्मानो ब्रह्मध्यानपरायणाः।
सहस्त्रसूर्यसंकाशाः सत्यवन्तो मुमुक्षवः। ५
एकदा ब्रह्मणः पुत्राः सनकाद्या महौजसः।
मेरुशृङ्गे समाजग्मुर्वीक्षितुं ब्रह्मणः सभाम्। ६
तत्र गङ्गां महापुण्यां विष्णुपादोद्भवां नदीम्।
निरीक्ष्य स्नातुमुद्युक्ताः सीताख्यां प्रथितौजसः। ७

एतस्मिन्नन्तरे विप्रा देवर्षिर्नारदो मुनिः।
आजगामोच्चरन् नाम हरेर्नारायणादिकम्। ८
नारायणाच्युतानन्त वासुदेव जनार्दन।
यज्ञेश यज्ञपुरुष राम विष्णो नमोऽस्तु ते। ९
इत्युच्चरन् हरेर्नाम पावयन्नखिलं जगत्।
आजगाम स्तुवन् गङ्गां मुनिर्लोकैकपावनीम्। १०
अथायान्तं समुद्वीक्ष्य सनकाद्या महौजसः।
यथार्हमर्हणं चक्रुर्ववन्दे सोऽपि तान् मुनीन्। ११
अथ तत्र सभामध्ये नारायणपरायणम्।
सनत्कुमारः प्रोवाच नारदं मुनिपुङ्गवम्। १२

*सनत्कुमार उवाच*

सर्वज्ञोऽसि महाप्राज्ञ मुनीशानां च नारद।
हरिभक्तिपरो यस्मात्त्वत्तो नास्त्यपरोऽधिकः। १३
येनेदमखिलं जातं जगत् स्थावरजङ्गमम्।
गङ्गा पादोद्भवा यस्य कथं स ज्ञायते हरिः। १४
अनुग्राह्योऽस्मि यदि ते तत्त्वतो वक्तुमर्हसि।

*नारद उवाच*

नमः पराय देवाय परात्परतराय च। १५
परात्परनिवासाय सगुणायागुणाय च।
ज्ञानाज्ञानस्वरूपाय धर्माधर्मस्वरूपिणे। १६
विद्याविद्यास्वरूपाय स्वस्वरूपाय ते नमः।
यो दैत्यहन्ता नरकान्तकश्च
भुजाग्रमात्रेण च धर्मगोप्ता। १७
भूभारसंघातविनोदकामं
नमामि देवं रघुवंशदीपम्।
आविर्भूतश्चतुर्द्धा यः कपिभिः परिवारितः। १८
हतवान् राक्षसानीकं रामं दाशरथिं भजे।
एवमादीन्यनेकानि चरितानि महात्मनः। १९
तेषां नामानि संख्यातुं शक्यन्ते नाब्दकोटिभिः।
महिमानं तु यन्नाम्नः पारं गन्तुं न शक्यते। २०
मनुभिश्च मुनीन्द्रैश्च कथं तं क्षुल्लको भजेत्।
यन्नाम्नः स्मरणेनापि महापातकिनोऽपि ये। २१
पावनत्वं प्रपद्यन्ते कथं स्तोष्यामि क्षुल्लधीः।
रामायणपरा ये तु घोरे कलियुगे द्विजाः। २२
त एव कृतकृत्याश्च तेषां नित्यं नमोऽस्तु ते।
ऊर्जे मासि सिते पक्षे चैत्रे माघे तथैव च। २३
नवाह्ना किल श्रोतव्यं रामायणकथामृतम्।
गौतमशापतः प्राप्तः सुदासो राक्षसीं तनुम्। २४
रामायणप्रभावेण विमुक्तिं प्राप्तवानसौ।

*सनत्कुमार उवाच*

रामायणं केन प्रोक्तं सर्वधर्मफलप्रदम्। २५
प्राप्तः कथं गौतमेन सौदासो मुनिसत्तम।
रामायणप्रभावेण कथं भूयो विमोक्षितः। २६
अनुग्राह्योऽस्मि यदि ते तत्त्वतो वक्तुमर्हसि।
सर्वमेतदशेषेण मुने नो वक्तुमर्हसि। २७
शृण्वतां वदतां चैव कथा पापविनाशिनी।

*नारद उवाच*

शृणु रामायणं विप्र यद् वाल्मीकिमुखोद्गतम्। २८
नवाह्ना खलु श्रोतव्यं रामायणकथामृतम्।
आस्ते कृतयुगे विप्रो धर्मकर्मविशारदः। २९
सोमदत्त इति ख्यातो नाम्ना धर्मपरायणः।
विप्रस्तु गौतमाख्येन मुनिना ब्रह्मवादिना। ३०
श्रावितः सर्वधर्मांश्च गङ्गातीरे मनोरमे।
पुराणशास्त्रकथनैस्तेनासौ बोधितोऽपि च। ३१
श्रुतवान् सर्वधर्मान् वै तेनोक्तानखिलानपि।
कदाचित् परमेशस्य परिचर्यापरोऽभवत्। ३२
उपस्थितायापि तस्मै प्रणामं न चकार सः।
स तु शान्तो महाबुद्धिर्गौतमस्तेजसां निधिः। ३३
शास्त्रोदितानि कर्माणि करोति स मुदं ययौ।
यस्त्वर्चितो महादेवः शिवः सर्वजगद्गुरुः। ३४
गुर्ववज्ञाकृतं पापं राक्षसत्वे नियुक्तवान्।
उवाच प्राञ्जलिर्भूत्वा विनयेषु च कोविदः। ३५

*विप्र उवाच*

भगवन् सर्वधर्मज्ञ सर्वदर्शिन् सुरेश्वर।
क्षमस्व भगवन् सर्वमपराधः कृतो मया। ३६

*गौतम उवाच*

ऊर्जे मासे सिते पक्षे रामायणकथामृतम्।
नवाह्ना चैव श्रोतव्यं भक्तिभावेन सादरम्। ३७
नात्यन्तिकं भवेदेतद् द्वादशाब्दं भविष्यति।

*विप्र उवाच*

केन रामायणं प्रोक्तं चरितानि तु कस्य वै। ३८
एतत् सर्वं महाप्राज्ञ संक्षेपाद् वक्तुमर्हसि।
मनसा प्रीतिमापन्नो ववन्दे चरणौ गुरोः। ३९

*गौतम उवाच*

शृणु रामायणं विप्र वाल्मीकिमुनिना कृतम्।
येन रामावतारेण राक्षसा रावणादयः। ४०

हतास्तु देवकार्यं हि चरितं तस्य तच्छृणु।
कार्त्तिके च सिते पक्षे कथा रामायणस्य तु।४१
नवमेऽहनि श्रोतव्या सर्वपापप्रणाशिनी।
इत्युक्त्वा चार्थसम्पन्नो गौतमः स्वाश्रमं ययौ।४२
विप्रोऽपि दुःखमापन्नो राक्षसीं तनुमाश्रितः।
क्षुत्पीडितः पिपासार्त्तो नित्यं क्रोधपरायणः।४३
कृष्णक्षपाद्युतिर्भीमो बभ्राम विजने वने।
मृगांश्च विविधांस्तत्र मनुष्यांश्च सरीसृपान्।४४
विहगान् प्लवगांश्चैव प्रसभात्तानभक्षयत्।
अस्थिभिर्बहुभिर्विप्राः पीतरक्तकलेवरैः।४५
रक्तादप्रेतकैश्चैव तेनासीद् भूर्भयंकरी।
ऋतुत्रये स पृथिवीं शतयोजनविस्तराम्।४६
कृत्वातिदुःखितां पश्चाद्वनान्तरमगात् पुनः।
तत्रापि कृतवान् नित्यं नरमांसाशनं तदा।४७
जगाम नर्मदातीरे सर्वलोकभयंकरः।
एतस्मिन्नन्तरे प्राप्तः कश्चिद् विप्रोऽतिधार्मिकः।४८
कलिङ्गदेशसम्भूतो नाम्ना गर्ग इति स्मृतः।
वहन् गङ्गाजलं स्कन्धे स्तुवन् विश्वेश्वरं प्रभुम्।४९
गायन् नामानि रामस्य समायातोऽतिहर्षितः।
तमायान्तं मुनिं दृष्ट्वा सुदासो नाम राक्षसः।५०
प्राप्तो नः पारणेत्युक्त्वा भुजावुद्यम्य तं ययौ।
तेन कीर्तितनामानि श्रुत्वा दूरे व्यवस्थितः।५१
अशक्तस्तं द्विजं हन्तुमिदमूचे स राक्षसः।

*राक्षस उवाच*

अहो भद्र महाभाग नमस्तुभ्यं महात्मने।५२
नामस्मरणमात्रेण राक्षसा अपि दूरगाः।
मया प्रभक्षिताः पूर्वं विप्राः कोटिसहस्रशः।५३
नामप्रावरणं विप्र रक्षति त्वां महाभयात्।
नामस्मरणमात्रेण राक्षसा अपि भो वयम्।५४
परां शान्तिं समापन्ना महिमा कोऽच्युतस्य हि।
सर्वथा त्वं महाभाग रागादिरहितो द्विज।५५
रामकथाप्रभावेण पाह्यस्मात् पातकाधमात्।
गुर्ववज्ञा मया पूर्वं कृता च मुनिसत्तम।५६
कृतश्चानुग्रहः पश्चाद् गुरुणोक्तमिदं वचः।
वाल्मीकिमुनिना पूर्वं कथा रामायणस्य च।५७
ऊर्जे मासे सिते पक्षे श्रोतव्या च प्रयत्नतः।
गुरुणापि पुनः प्रोक्तं रम्यं तु शुभदं वचः।५८
नवाह्ना खलु श्रोतव्यं रामायणकथामृतम्।
तस्माद् ब्रह्मन् महाभाग सर्वशास्त्रार्थकोविद।५९
कथाश्रवणमात्रेण पाह्यस्मात् पापकर्मणः।

*नारद उवाच*

ततो रामायणं ख्यातं राममाहात्म्यमुत्तमम्।६०
निशम्य विस्मयाविष्टो बभूव द्विजसत्तमः।
ततो विप्रः कृपाविष्टो रामनामपरायणः।६१
सुदासराक्षसं नाम चेदं वाक्यमथाब्रवीत्।

*विप्र उवाच*

राक्षसेन्द्र महाभाग मतिस्ते विमलाभवत्।६२
अस्मिन्नूर्जे सिते पक्षे रामायणकथां शृणु।
शृणु त्वं राममाहात्म्यं रामभक्तिपरायण।६३
रामध्यानपराणां च कः समर्थः प्रबाधितुम्।
रामभक्तिपरो यत्र तत्र ब्रह्मा हरिः शिवः।६४
तत्र देवाश्च सिद्धाश्च रामायणपरा नराः।
तस्मादूर्जे सिते पक्षे रामायणकथां शृणु।६५
नवाह्ना खलु श्रोतव्यं सावधानः सदा भव।
इत्युक्त्वा कथयामास रामायणकथां मुनिः।६६
कथाश्रवणमात्रेण राक्षसत्वमपाकृतम्।
विसृज्य राक्षसं भावमभवद् देवतोपमः।६७
कोटिसूर्यप्रतीकाशो नारायणसमप्रभः।
शङ्खचक्रगदापाणिर्हरेः सद्म जगाम सः।६८
स्तुवन् तं ब्राह्मणं सम्यग् जगाम हरिमन्दिरम्।६९

*नारद उवाच*

तस्माच्छृणुध्वं विप्रेन्द्रा रामायणकथामृतम्।
स तस्य महिमा तत्र ऊर्जे मासि च कीर्त्यते।७०
यन्नामस्मरणादेव महापातककोटिभिः।
विमुक्तः सर्वपापेभ्यो नरो याति परां गतिम्।७१
रामायणेति यन्नाम सकृदप्युच्यते यदा।
तदैव पापनिर्मुक्तो विष्णुलोकं स गच्छति।७२
ये पठन्ति सदाऽऽख्यानं भक्त्या शृण्वन्ति ये नराः।
गङ्गास्नानाच्छतगुणं तेषां संजायते फलम्।७३

इति श्रीस्कन्दपुराणे उत्तरखण्डे नारदसनत्कुमारसंवादे रामायणमाहात्म्ये राक्षसमोक्षणं नाम द्वितीयोऽध्यायः॥ २॥

# तृतीयोऽध्यायः

## माघमासे रामायणश्रवणफलम्—राज्ञः सुमते राज्ञ्याः सत्यवत्याश्च पूर्वजन्मेतिहासः

*सनत्कुमार उवाच*

अहो विप्र इदं प्रोक्तमितिहासं च नारद।
रामायणस्य माहात्म्यं त्वं पुनर्वद विस्तरात्। १
अन्यमासस्य माहात्म्यं कथयस्व प्रसादतः।
कस्य नो जायते तुष्टिर्मुने त्वद्वचनामृतात्। २

*नारद उवाच*

सर्वे यूयं महाभागाः कृतार्था नात्र संशयः।
यतः प्रभावं रामस्य भक्तितः श्रोतुमुद्यताः। ३
माहात्म्यश्रवणं यस्य राघवस्य कृतात्मनाम्।
दुर्लभं प्राहुरत्यन्तं मुनयो ब्रह्मवादिनः। ४
शृणुध्वमृषयश्चित्रमितिहासं पुरातनम्।
सर्वपापप्रशमनं सर्वरोगविनाशनम्। ५
आसीत् पुरा द्वापरे च सुमतिर्नाम भूपतिः।
सोमवंशोद्भवः श्रीमान् सप्तद्वीपैकनायकः। ६
धर्मात्मा सत्यसम्पन्नः सर्वसम्पद्विभूषितः।
सदा रामकथासेवी रामपूजापरायणः। ७
रामपूजापराणां च शुश्रूषुरनहंकृतिः।
पूज्येषु पूजानिरतः समदर्शी गुणान्वितः। ८
सर्वभूतहितः शान्तः कृतज्ञः कीर्तिमान् नृपः।
तस्य भार्या महाभागा सर्वलक्षणसंयुता। ९
पतिव्रता पतिप्राणा नाम्ना सत्यवती श्रुता।
तावुभौ दम्पती नित्यं रामायणपरायणौ। १०
अन्नदानरतौ नित्यं जलदानपरायणौ।
तडागारामवाप्यादीनसंख्यातान् वितेनतुः। ११
सोऽपि राजा महाभागो रामायणपरायणः।
वाचयेच्छृणुयाद् वापि भक्तिभावेन भावितः। १२
एवं रामपरं नित्यं राजानं धर्मकोविदम्।
तस्य प्रियां सत्यवतीं देवा अपि सदास्तुवन्। १३
विश्रुतौ त्रिषु लोकेषु दम्पती तौ हि धार्मिकौ।
आययौ बहुभिः शिष्यैर्द्रष्टुकामो विभाण्डकः। १४
विभाण्डकं मुनिं दृष्ट्वा सुखमाप्तो जनेश्वरः।
प्रत्युद्ययौ सपत्नीकः पूजाभिर्बहुविस्तरम्। १५
कृतातिथ्यक्रियं शान्तं कृतासनपरिग्रहम्।
निजासनगतो भूपः प्राञ्जलिर्मुनिमब्रवीत्। १६

*राजोवाच*

भगवन् कृतकृत्योऽद्य त्वदभ्यागमनेन भोः।
सतामागमनं सन्तः प्रशंसन्ति सुखावहम्। १७
यत्र स्यान्महतां प्रेम तत्र स्युः सर्वसम्पदः।
तेजः कीर्तिर्धनं पुत्र इति प्राहुर्विपश्चितः। १८
तत्र वृद्धिं गमिष्यन्ति श्रेयांस्यनुदिनं मुने।
यत्र सन्तः प्रकुर्वन्ति महतीं करुणां प्रभो। १९
यो मूर्ध्नि धारयेद् ब्रह्मन् विप्रपादतलोदकम्।
स स्नातो सर्वतीर्थेषु पुण्यवान् नात्र संशयः। २०
मम पुत्राश्च दाराश्च सम्पदश्च समर्पिताः।
समाज्ञापय शान्तात्मन् वयं किं करवाणि ते। २१
इत्थं वदन्तं भूपं तं स निरीक्ष्य मुनीश्वरः।
स्पृशन् करेण राजानं प्रत्युवाचातिहर्षितः। २२

*ऋषिरुवाच*

राजन् यदुक्तं भवता तत्सर्वं त्वत्कुलोचितम्।
विनयावनताः सर्वे परं श्रेयो भजन्ति हि। २३
प्रीतोऽस्मि तव भूपाल सन्मार्गपरिवर्तिनः।
स्वस्ति तेऽस्तु महाभाग यत्पृच्छामि तदुच्यताम्। २४
हरिसंतोषकान्यासन् पुराणानि बहून्यपि।
माघे मासि चोद्यतोऽसि रामायणपरायणः। २५
तव भार्यापि साध्वीयं नित्यं रामपरायणा।
किमर्थमेतद् वृत्तान्तं यथावद् वक्तुमर्हसि। २६

*राजोवाच*

शृणुष्व भगवन् सर्वं यत्पृच्छसि वदामि तत्।
आश्चर्यं यद्धि लोकानामावयोश्चरितं मुने। २७
अहमासं पुरा शूद्रो मालतिर्नाम सत्तम।
कुमार्गनिरतो नित्यं सर्वलोकाहिते रतः। २८
पिशुनो धर्मविद्वेषी देवद्रव्यापहारकः।
महापातकिसंसर्गी देवद्रव्योपजीवकः। २९
गोघ्नश्च ब्रह्महा चौरो नित्यं प्राणिवधे रतः।
नित्यं निष्ठुरवक्ता च पापी वेश्यापरायणः। ३०
किञ्चित् काले स्थितो ह्येवमनादृत्य महद्वचः।
सर्वबन्धुपरित्यक्तो दुःखी वनमुपागमम्। ३१

मृगमांसाशनं नित्यं तथा मार्गविरोधकृत्।
एकाकी दुःखबहुलो न्यवसं निर्जने वने।३२
एकदा क्षुत्परिश्रान्तो निद्राघूर्णः पिपासितः।
वसिष्ठस्याश्रमं दैवादपश्यं निर्जने वने।३३
हंसकारण्डवाकीर्णं तत्समीपे महत्सरः।
पर्यन्ते वनपुष्पौघैश्छादितं तन्मुनीश्वर।३४
अपिबं तत्र पानीयं तत्तटे विगतश्रमः।
उन्मूल्य वृक्षमूलानि मया क्षुच्च निवारिता।३५
वसिष्ठस्याश्रमे तत्र निवासं कृतवानहम्।
शीर्णस्फटिकसंधानं तत्र चाहमकारिषम्।३६
पर्णैस्तृणैश्च काष्ठैश्च गृहं सम्यक् प्रकल्पितम्।
तत्राहं व्याधसत्त्वस्थो हत्वा बहुविधान् मृगान्।३७
आजीविकां च कुर्वाणो वत्सराणां च विंशतिम्।
अथेयमागता साध्वी विन्ध्यदेशसमुद्भवा।३८
निषादकुलसम्भूता नाम्ना कालीति विश्रुता।
बन्धुवर्गैः परित्यक्ता दुःखिता जीर्णविग्रहा।३९
ब्रह्मन् क्षुत्तृट्परिश्रान्ता शोचन्ती भौक्तिकीं क्रियाम्।
दैवयोगात् समायाता भ्रमन्ती विजने वने।४०
मासे ग्रीष्मे च तापार्त्ता ह्यन्तस्तापप्रपीडिता।
इमां दुःखवतीं दृष्ट्वा जाता मे विपुला घृणा।४१
मया दत्तं जलं चास्यै मांसं वनफलं तथा।
गतश्रमा तु सा पृष्टा मया ब्रह्मन् यथातथम्।४२
न्यवेदयत् स्वकर्माणि तानि शृणु महामुने।
इयं काली तु नाम्ना वै निषादकुलसम्भवा।४३
दाम्भिकस्य सुता विद्वन् न्यवसद् विन्ध्यपर्वते।
परस्वहारिणी नित्यं सदा पैशुन्यवादिनी।४४
बन्धुवर्गैः परित्यक्ता यतो हतवती पतिम्।
कान्तारे विजने ब्रह्मन् मत्समीपमुपागता।४५
इत्येवं स्वकृतं कर्म सर्वं मह्यं न्यवेदयत्।
वसिष्ठस्याश्रमे पुण्ये अहं चेयं च वै मुने।४६
दम्पतीभावमाश्रित्य स्थितौ मांसाशिनौ तदा।
उद्यमार्थे गतौ चैव वसिष्ठस्याश्रमं तदा।४७
दृष्ट्वा चैव समाजं च देवर्षीणां च सत्तम।
रामायणपरा विप्रा माघे दृष्ट्वा दिने दिने।४८
निराहारौ च विक्रान्तौ क्षुत्पिपासाप्रपीडितौ।
अनिच्छया गतौ तत्र वसिष्ठस्याश्रमं प्रति।४९
रामायणकथां श्रोतुं नवाह्ना चैव भक्तितः।
तत्काल एव पञ्चत्वमावयोरभवन्मुने।५०
कर्मणा तेन तुष्टात्मा भगवान् मधुसूदनः।
स्वदूतान् प्रेषयामास मदाहरणकारणात्।५१
आरोप्य मां विमाने तु जग्मुस्ते च परं पदम्।
आवां समीपमापन्नौ देवदेवस्य चक्रिणः।५२
भुक्तवन्तौ महाभोगान् यावत्कालं शृणुष्व मे।
युगकोटिसहस्राणि युगकोटिशतानि च।५३
उषित्वा रामभवने ब्रह्मलोकमुपागतौ।
तावत्कालं च तत्रापि स्थित्वैन्द्रपदमागतौ।५४
तत्रापि तावत्कालं च भुक्त्वा भोगाननुत्तमान्।
ततः पृथ्वीं वयं प्राप्ताः क्रमेण मुनिसत्तम।५५
अत्रापि सम्पदतुला रामायणप्रसादतः।
अनिच्छया कृतेनापि प्राप्तमेवंविधं मुने।५६
नवाह्ना किल श्रोतव्यं रामायणकथामृतम्।
भक्तिभावेन धर्मात्मञ्जन्ममृत्युजरापहम्।५७
अवशेनापि यत्कर्म कृतं तु सुमहत्फलम्।
ददाति शृणु विप्रेन्द्र रामायणप्रसादतः।५८

*नारद उवाच*

एतत्सर्वं निशम्यासौ विभाण्डको मुनीश्वरः।
अभिनन्द्य महीपालं प्रययौ स्वतपोवनम्।५९
तस्माच्छृणुध्वं विप्रेन्द्रा देवदेवस्य चक्रिणः।
रामायणकथा चैव कामधेनूपमा स्मृता।६०
माघे मासे सिते पक्षे रामायणं प्रयत्नतः।
नवाह्ना किल श्रोतव्यं सर्वधर्मफलप्रदम्।६१
य इदं पुण्यमाख्यानं सर्वपापप्रणाशनम्।
वाचयेच्छृणुयाद् वापि रामभक्तश्च जायते।६२

इति श्रीस्कन्दपुराणे उत्तरखण्डे नारदसनत्कुमारसंवादे रामायणमाहात्म्ये
माघमासफलानुकीर्तनं नाम तृतीयोऽध्यायः॥ ३॥

# चतुर्थोऽध्यायः

## चैत्रमासे रामायणपठनश्रवणमाहात्म्यं कलिकाख्यव्याधस्योत्तङ्कमुनेश्च कथा

*नारद उवाच*

अन्यमासं प्रवक्ष्यामि शृणुध्वं सुसमाहिताः।
सर्वपापहरं पुण्यं सर्वदुःखनिबर्हणम्। १

ब्राह्मणक्षत्रियविशां शूद्राणां चैव योषिताम्।
समस्तकामफलदं सर्वव्रतफलप्रदम्। २

दुःस्वप्ननाशनं धन्यं भुक्तिमुक्तिफलप्रदम्।
रामायणस्य माहात्म्यं श्रोतव्यं च प्रयत्नतः। ३

अत्रैवोदाहरन्तीममितिहासं पुरातनम्।
पठतां शृण्वतां चैव सर्वपापप्रणाशनम्। ४

आसीत् पुरा कलियुगे कलिको नाम लुब्धकः।
परदारपरद्रव्यहरणे सततं रतः। ५

परनिन्दापरो नित्यं जन्तुपीडाकरस्तथा।
हतवान् ब्राह्मणान् गावः शतशोऽथ सहस्रशः। ६

देवस्वहरणे नित्यं परस्वहरणे तथा।
तेन पापान्यनेकानि कृतानि सुमहान्ति च। ७

न तेषां शक्यते वक्तुं संख्या वत्सरकोटिभिः।
स कदाचिन्महापापो जन्तूनामन्तकोपमः। ८

सौवीरनगरं प्राप्तः सर्वैश्वर्यसमन्वितम्।
योषिद्भिर्भूषिताभिश्च सरोभिर्विमलोदकैः। ९

अलंकृतं विपणिभिर्ययौ देवपुरोपमम्।
तस्योपवनमध्यस्थं रम्यं केशवमन्दिरम्। १०

छादितं हेमकलशैर्दृष्ट्वा व्याधो मुदं ययौ।
हराम्यत्र सुवर्णानि बहूनीति विनिश्चितः। ११

जगाम रामभवनं कीनाशश्चौर्यलोलुपः।
तत्रापश्यद् द्विजवरं शान्तं तत्त्वार्थकोविदम्। १२

परिचर्यापरं विष्णोरुत्तङ्कं तपसां निधिम्।
एकाकिनं दयालुं च निःस्पृहं ध्यानलोलुपम्। १३

दृष्ट्वासौ लुब्धको मेने तं चौर्यस्यान्तरायिणम्।
देवस्य द्रव्यजातं तु समादाय महानिशि। १४

उत्तङ्कं हन्तुमारेभे उद्यतासिर्मदोद्धतः।
पादेनाक्रम्य तद्वक्षो गलं संगृह्य पाणिना। १५

हन्तुं कृतमतिं व्याधं उत्तङ्को प्रेक्ष्य चाब्रवीत्।

*उत्तङ्क उवाच*

भो भोः साधो वृथा मां त्वं हनिष्यसि निरागसम्। १६
मया किमपराद्धं ते तद् वद त्वं च लुब्धक।

कृतापराधिनो लोके हिंसां कुर्वन्ति यत्नतः। १७
न हिंसन्ति वृथा सौम्य सज्जना अप्यपापिनम्।

विरोधिष्वपि मूर्खेषु निरीक्ष्यावस्थितान् गुणान्। १८
विरोधं नाधिगच्छन्ति सज्जनाः शान्तचेतसः।

बहुधा वाच्यमानोऽपि यो नरः क्षमयान्वितः। १९
तमुत्तमं नरं प्राहुर्विष्णोः प्रियतरं तथा। २०

सुजनो न याति वैरं परहितनिरतो विनाशकालेऽपि।
छेदेऽपि चन्दनतरुः सुरभीकरोति मुखं कुठारस्य। २१

अहो विधिर्वै बलवान् बाधते बहुधा जनान्।
सर्वसङ्गविहीनोऽपि बाध्यते तु दुरात्मना। २२

अहो निष्कारणं लोके बाधन्ते दुर्जना जनान्।
धीवराः पिशुना व्याधा लोकेऽकारणवैरिणः। २३

अहो बलवती माया मोहयत्यखिलं जगत्।
पुत्रमित्रकलत्राद्यैः सर्वदुःखेन योज्यते। २४

परद्रव्यापहारेण कलत्रं पोषितं च यत्।
अन्ते तत् सर्वमुत्सृज्य एक एव प्रयाति वै। २५

मम माता मम पिता मम भार्या ममात्मजाः।
ममेदमिति जन्तूनां ममता बाधते वृथा। २६

यावदर्पयति द्रव्यं तावद् भवति बान्धवः।
अर्जितं तु धनं सर्वे भुञ्जन्ते बान्धवाः सदा। २७

दुःखमेकतमो मूढस्तत्पापफलमश्नुते।
इति ब्रुवाणं तमृषिं विमृश्य भयविह्वलः। २८

कलिकः प्राञ्जलिः प्राह क्षमस्वेति पुनः पुनः।
तत्सङ्गस्य प्रभावेण हरिसंनिधिमात्रतः। २९

गतपापो लुब्धकश्च सानुतापोऽभवद् ध्रुवम्।
मया कृतानि पापानि महान्ति सुबहूनि च। ३०

तानि सर्वाणि नष्टानि विप्रेन्द्र तव दर्शनात्।
अहं वै पापधीर्नित्यं महापापं समाचरम्। ३१

कथं मे निष्कृतिर्भूयात् कं यामि शरणं विभो।
पूर्वजन्मार्जितैः पापैर्लुब्धकत्वमवाप्तवान्। ३२

अत्रापि पापजालानि कृत्वा कां गतिमाप्नुयाम्।
इति वाक्यं समाकर्ण्य कलिकस्य महात्मनः। ३३

उत्तङ्को नाम विप्रर्षिरिदं वाक्यमथाब्रवीत्।

*उत्तङ्क उवाच*

साधु साधु महाप्राज्ञ मतिस्ते विमलोज्ज्वला। ३४
यस्मात् संसारदुःखानां नाशोपायमभीप्ससि।
चैत्रे मासि सिते पक्षे कथा रामायणस्य च। ३५
नवाह्ना किल श्रोतव्या भक्तिभावेन सादरम्।
यस्य श्रवणमात्रेण सर्वपापैः प्रमुच्यते। ३६
तस्मिन् क्षणेऽसौ कलिको लुब्धको वीतकल्मषः।
रामायणकथां श्रुत्वा सद्यः पञ्चत्वमागतः। ३७
उत्तङ्कः पतितं वीक्ष्य लुब्धकं तं दयापरः।
एतद् दृष्ट्वा विस्मितश्च अस्तौषीत् कमलापतिम्। ३८
कथां रामायणस्यापि श्रुत्वा च वीतकल्मषः।
दिव्यं विमानमारुह्य मुनिमेतदथाब्रवीत्। ३९
विमुक्तस्त्वत्प्रसादेन महापातकसंकटात्।
तस्मान्नतोऽस्मि ते विद्वन् यत् कृतं तत् क्षमस्व मे। ४०

*सूत उवाच*

इत्युक्त्वा देवकुसुमैर्मुनिश्रेष्ठमवाकिरत्।
प्रदक्षिणात्रयं कृत्वा नमस्कारं चकार ह। ४१
ततो विमानमारुह्य सर्वकामसमन्वितम्।
अप्सरोगणसंकीर्णं प्रपेदे हरिमन्दिरम्। ४२
तस्माच्छृणुध्वं विप्रेन्द्राः कथां रामायणस्य च।
चैत्रे मासि सिते पक्षे श्रोतव्यं च प्रयत्नतः। ४३
नवाह्ना किल रामस्य रामायणकथामृतम्।
तस्मादृतुषु सर्वेषु हितकृद्धरिपूजकः। ४४
ईप्सितं मनसा यद्यत् तदाप्नोति न संशयः।
सनत्कुमार यत् पृष्टं तत् सर्वं गदितं मया। ४५
रामायणस्य माहात्म्यं किमन्यच्छ्रोतुमिच्छसि। ४६

इति श्रीस्कन्दपुराणे उत्तरखण्डे नारदसनत्कुमारसंवादे रामायणमाहात्म्ये
चैत्रमासफलानुकीर्तनं नाम चतुर्थोऽध्यायः॥ ४॥

# पञ्चमोऽध्यायः

## रामायणस्य नवाहश्रवणविधेर्माहात्म्यस्य फलस्य च वर्णनम्

*सूत उवाच*

रामायणस्य माहात्म्यं श्रुत्वा प्रीतो मुनीश्वरः।
सनत्कुमारः पप्रच्छ नारदं मुनिसत्तमम्। १

*सनत्कुमार उवाच*

रामायणस्य माहात्म्यं कथितं वै मुनीश्वर।
इदानीं श्रोतुमिच्छामि विधिं रामायणस्य च। २
एतच्चापि महाभाग मुने तत्त्वार्थकोविद।
कृपया परयाविष्टो यथावद् वक्तुमर्हसि। ३

*नारद उवाच*

रामायणविधिं चैव शृणुध्वं सुसमाहिताः।
सर्वलोकेषु विख्यातं स्वर्गमोक्षविवर्धनम्। ४
विधानं तस्य वक्ष्यामि शृणुध्वं गदतो मम।
रामायणकथां कुर्वन् भक्तिभावेन भावितः। ५
येन चीर्णेन पापानां कोटिकोटिः प्रणश्यति।
चैत्रे माघे कार्त्तिके च पञ्चम्यामथवाऽऽरभेत्। ६
संकल्पं तु ततः कुर्यात् स्वस्तिवाचनपूर्वकम्।
अहोभिर्नवभिः श्राव्यं रामायणकथामृतम्। ७
अद्य प्रभृत्यहं राम शृणोमि त्वत्कथामृतम्।
प्रत्यहं पूर्णतामेतु तव राम प्रसादतः। ८
प्रत्यहं दन्तशुद्धिं च अपामार्गस्य शाखया।
कृत्वा स्नायीत विधिवद् रामभक्तिपरायणः। ९
स्वयं च बन्धुभिः सार्द्धं शृणुयात् प्रयतेन्द्रियः।
स्नानं कृत्वा यथाचारं दन्तधावनपूर्वकम्। १०
शुक्लाम्बरधरः शुद्धो गृहमागत्य वाग्यतः।
प्रक्षाल्य पादावाचम्य स्मरेन्नारायणं प्रभुम्। ११
नित्यं देवार्चनं कृत्वा पश्चात् संकल्पपूर्वकम्।
रामायणपुस्तकं च अर्चयेद् भक्तिभावतः। १२
आवाहनासनाद्यैश्च गन्धपुष्पादिभिर्व्रती।
ॐ नमो नारायणायेति पूजयेद् भक्तितत्परः। १३
एकवारं द्विवारं वा त्रिवारं वापि शक्तितः।
होमं कुर्यात् प्रयत्नेन सर्वपापनिवृत्तये। १४
एवं यः प्रयतः कुर्याद् रामायणविधिं तथा।
स याति विष्णुभवनं पुनरावृत्तिदुर्लभम्। १५
रामायणव्रतधरो धर्मकारी च सत्तमः।
चाण्डालं पतितं वापि वस्त्रान्नेनापि नार्चयेत्। १६
नास्तिकान् भिन्नमर्यादान् निन्दकान् पिशुनानपि।
रामायणव्रतपरो वाङ्मात्रेणापि नार्चयेत्। १७

कुण्डाशिनं गायकं च तथा देवलकाशनम्।
भिषजं काव्यकर्तारं देवद्विजविरोधिनम्।१८
परान्नलोलुपं चैव परस्त्रीनिरतं तथा।
रामायणव्रतपरो वाङ्मात्रेणापि नार्चयेत्।१९
इत्येवमादिभिः शुद्धो वशी सर्वहिते रतः।
रामायणपरो भूत्वा परां सिद्धिं गमिष्यति।२०
नास्ति गङ्गासमं तीर्थं नास्ति मातृसमो गुरुः।
नास्ति विष्णुसमो देवो नास्ति रामायणात् परम्।२१
नास्ति वेदसमं शास्त्रं नास्ति शान्तिसमं सुखम्।
नास्ति शान्तिपरं ज्योतिर्नास्ति रामायणात् परम्।२२
नास्ति क्षमासमं सारं नास्ति कीर्तिसमं धनम्।
नास्ति ज्ञानसमो लाभो नास्ति रामायणात् परम्।२३
तदन्ते वेदविदुषे गां दद्याच्च सदक्षिणाम्।
रामायणं पुस्तकं च वस्त्रालंकरणादिकम्।२४
रामायणपुस्तकं यो वाचकाय प्रयच्छति।
स याति विष्णुभवनं यत्र गत्वा न शोचति।२५
नवाहजफलं कर्तुः शृणु धर्मविदां वर।
पञ्चम्यां तु समारभ्य रामायणकथामृतम्।२६
कथाश्रवणमात्रेण सर्वपापैः प्रमुच्यते।
यदि द्वयं कृतं तस्य पुण्डरीकफलं लभेत्।२७
व्रतधारी तु श्रवणं यः कुर्यात् स जितेन्द्रियः।
अश्वमेधस्य यज्ञस्य द्विगुणं फलमश्नुते।२८
चतुःकृत्वः श्रुतं येन कथितं मुनिसत्तमाः।
स लभेत् परमं पुण्यमग्निष्टोमाष्टसम्भवम्।२९
पञ्चकृत्वो व्रतमिदं कृतं येन महात्मना।
अत्यग्निष्टोमजं पुण्यं द्विगुणं प्राप्नुयान्नरः।३०
एवं व्रतं च षड्वारं कुर्याद् यस्तु समाहितः।
अग्निष्टोमस्य यज्ञस्य फलमष्टगुणं लभेत्।३१
नारी वा पुरुषः कुर्यादष्टकृत्वो मुनीश्वराः।
नरमेधस्य यज्ञस्य फलं पञ्चगुणं लभेत्।३२
नरो वाप्यथ नारी वा नववारं समाचरेत्।
गोमेधसवजं पुण्यं स लभेत् त्रिगुणं नरः।३३
रामायणं तु यः कुर्याच्छान्तात्मा प्रयतेन्द्रियः।
स याति परमानन्दं यत्र गत्वा न शोचति।३४
रामायणपरो नित्यं गङ्गास्नानपरायणः।
धर्ममार्गप्रवक्तारो मुक्ता एवं न संशयः।३५
यतीनां ब्रह्मचारिणां प्रवीराणां च सत्तमाः।
नवाह्ना किल श्रोतव्या कथा रामायणस्य च।३६
श्रुत्वा नरो रामकथामतिदीप्तोऽतिभक्तितः।
ब्रह्मणः पदमासाद्य तत्रैव परिमोदते।३७
तस्माच्छृणुध्वं विप्रेन्द्रा रामायणकथामृतम्।
श्रोतॄणां च परं श्राव्यं पवित्राणामनुत्तमम्।३८
दुःस्वप्ननाशनं धन्यं श्रोतव्यं च प्रयत्नतः।
नरोऽत्र श्रद्धया युक्तः श्लोकं श्लोकार्द्धमेव च।३९
पठते मुच्यते सद्यो ह्युपपातककोटिभिः।
सतामेव प्रयोक्तव्यं गुह्याद्गुह्यतमं तु यत्।४०
वाचयेद् रामभवने पुण्यक्षेत्रे च संसदि।
ब्रह्मद्वेषरतानां च दम्भाचाररतात्मनाम्।४१
लोकवञ्चकवृत्तीनां न ब्रूयादिदमुत्तमम्।
त्यक्तकामादिदोषाणां रामभक्तिरतात्मनाम्।४२
गुरुभक्तिरतानां च वक्तव्यं मोक्षसाधनम्।
सर्वदेवमयो रामः स्मृतश्चार्त्तिप्रणाशनः।४३
सद्भक्तवत्सलो देवो भक्त्या तुष्यति नान्यथा।
अवशेनापि यन्नाम्नि कीर्तिते वा स्मृतेऽपि वा।४४
विमुक्तपातकः सोऽपि परमं पदमश्नुते।
संसारघोरकान्तारदावाग्निर्मधुसूदनः।४५
स्मर्तॄणां सर्वपापानि नाशयत्याशु सत्तमाः।
तदर्थकमिदं पुण्यं काव्यं श्राव्यमनुत्तमम्।४६
श्रवणात् पठनाद् वापि सर्वपापविनाशकृत्।
यस्य रामरसे प्रीतिर्वर्तते भक्तिसंयुता।४७
स एव कृतकृत्यश्च सर्वशास्त्रार्थकोविदः।
तदर्जितं तपः पुण्यं तत्सत्यं सफलं द्विजाः।४८
यदर्थश्रवणे प्रीतिरन्यथा न हि वर्तते।
रामायणपरा ये तु रामनामपरायणाः।४९
त एव कृतकृत्याश्च घोरे कलियुगे द्विजाः।
नवाह्ना किल श्रोतव्यं रामायणकथामृतम्।५०
ते कृतज्ञा महात्मानस्तेभ्यो नित्यं नमो नमः।
रामनामैव नामैव नामैव मम जीवनम्।५१
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा।

*सूत उवाच*

एवं सनत्कुमारस्तु नारदेन महात्मना।५२
सम्यक् प्रबोधितः सद्यः परां निर्वृतिमाप ह।
तस्माच्छृणुध्वं विप्रेन्द्रा रामायणकथामृतम्।५३
नवाह्ना किल श्रोतव्यं सर्वपापैः प्रमुच्यते।
श्रुत्वा चैतन्महाकाव्यं वाचकं यस्तु पूजयेत्।५४

तस्य विष्णुः प्रसन्नः स्याच्छ्रिया सह द्विजोत्तमाः।
वाचके प्रीतिमापन्ने ब्रह्मविष्णुमहेश्वराः। ५५
प्रीता भवन्ति विप्रेन्द्रा नात्र कार्या विचारणा।
रामायणवाचकाय गावो वासांसि काञ्चनम्। ५६
रामायणपुस्तकं च दद्याद् वित्तानुसारतः।
तस्य पुण्यफलं वक्ष्ये शृणुध्वं सुसमाहिताः। ५७
न बाधन्ते ग्रहास्तस्य भूतवेतालकादयः।
तस्यैव सर्वश्रेयांसि वर्द्धन्ते चरिते श्रुते। ५८
न चाग्निर्बाधते तस्य न चौरादिभयं तथा।
एतज्जन्मार्जितैः पापैः सद्य एव विमुच्यते। ५९
सप्तवंशसमेतस्तु देहान्ते मोक्षमाप्नुयात्।
इत्येतद्वः समाख्यातं नारदेन प्रभाषितम्। ६०
सनत्कुमारमुनये पृच्छते भक्तितः पुरा।
रामायणमादिकाव्यं सर्ववेदार्थसम्मतम्। ६१
सर्वपापहरं पुण्यं सर्वदुःखनिबर्हणम्।
समस्तपुण्यफलदं सर्वयज्ञफलप्रदम्। ६२
ये पठन्त्यत्र विबुधाः श्लोकं श्लोकार्द्धमेव च।
न तेषां पापबन्धस्तु कदाचिदपि जायते। ६३
रामार्पितमिदं पुण्यं काव्यं तु सर्वकामदम्।
भक्त्या शृण्वन्ति विदन्ति तेषां पुण्यफलं शृणु। ६४
शतजन्मार्जितैः पापैः सद्य एव विमोचिताः।
सहस्रकुलसंयुक्तैः प्रयान्ति परमं पदम्। ६५
किं तीर्थैर्गोप्रदानैर्वा किं तपोभिः किमध्वरैः।
अहन्यहनि रामस्य कीर्तनं परिशृण्वताम्। ६६
चैत्रे माघे कार्तिके च रामायणकथामृतम्।
नवैरहोभिः श्रोतव्यं रामायणकथामृतम्। ६७
रामप्रसादजनकं रामभक्तिविवर्धनम्।
सर्वपापक्षयकरं सर्वसम्पद्विवर्द्धनम्। ६८
यस्त्वेतच्छृणुयाद् वापि पठेद् वा सुसमाहितः।
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति। ६९

इति श्रीस्कन्दपुराणे उत्तरखण्डे नारदसनत्कुमारसंवादे रामायणमाहात्म्ये
नवाहश्रवणफलानुकीर्तनं नाम पञ्चमोऽध्यायः॥ ५॥

॥ श्रीसीतारामचन्द्राभ्यां नमः ॥

# श्रीमद्वाल्मीकीयरामायणम्

## बालकाण्डम्

### प्रथमः सर्गः

#### नारदेन वाल्मीकिं प्रति संक्षेपतः श्रीरामचरित्रस्य श्रावणम्

ॐ तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम्।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम्। १
को न्वस्मिन् साम्प्रतं लोके गुणवान् कश्च वीर्यवान्।
धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः। २
चारित्रेण च को युक्तः सर्वभूतेषु को हितः।
विद्वान् कः कः समर्थश्च कश्चैकप्रियदर्शनः। ३
आत्मवान् को जितक्रोधो द्युतिमान् कोऽनसूयकः।
कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे। ४
एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे।
महर्षे त्वं समर्थोऽसि ज्ञातुमेवंविधं नरम्। ५
श्रुत्वा चैतत्त्रिलोकज्ञो वाल्मीकेर्नारदो वचः।
श्रूयतामिति चामन्त्र्य प्रहृष्टो वाक्यमब्रवीत्। ६
बहवो दुर्लभाश्चैव ये त्वया कीर्तिता गुणाः।
मुने वक्ष्याम्यहं बुद्ध्वा तैर्युक्तः श्रूयतां नरः। ७
इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः।
नियतात्मा महावीर्यो द्युतिमान् धृतिमान् वशी। ८
बुद्धिमान् नीतिमान् वाग्मी श्रीमाञ्छत्रुनिबर्हणः।
विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः। ९
महोरस्को महेष्वासो गूढजत्रुररिन्दमः।
आजानुबाहुः सुशिराः सुललाटः सुविक्रमः। १०
समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान्।
पीनवक्षा विशालाक्षो लक्ष्मीवाञ्छुभलक्षणः। ११
धर्मज्ञः सत्यसंधश्च प्रजानां च हिते रतः।
यशस्वी ज्ञानसम्पन्नः शुचिर्वश्यः समाधिमान्। १२
प्रजापतिसमः श्रीमान् धाता रिपुनिषूदनः।
रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता। १३
रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता।
वेदवेदाङ्गतत्त्वज्ञो धनुर्वेदे च निष्ठितः। १४
सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान् प्रतिभानवान्।
सर्वलोकप्रियः साधुरदीनात्मा विचक्षणः। १५
सर्वदाभिगतः सद्भिः समुद्र इव सिन्धुभिः।
आर्यः सर्वसमश्चैव सदैव प्रियदर्शनः। १६
स च सर्वगुणोपेतः कौसल्यानन्दवर्धनः।
समुद्र इव गाम्भीर्ये धैर्येण हिमवानिव। १७
विष्णुना सदृशो वीर्ये सोमवत्प्रियदर्शनः।
कालाग्निसदृशः क्रोधे क्षमया पृथिवीसमः। १८
धनदेन समस्त्यागे सत्ये धर्म इवापरः।
तमेवंगुणसम्पन्नं रामं सत्यपराक्रमम्। १९
ज्येष्ठं ज्येष्ठगुणैर्युक्तं प्रियं दशरथः सुतम्।
प्रकृतीनां हितैर्युक्तं प्रकृतिप्रियकाम्यया। २०
यौवराज्येन संयोक्तुमैच्छत् प्रीत्या महीपतिः।
तस्याभिषेकसम्भारान् दृष्ट्वा भार्याथ कैकयी। २१
पूर्वं दत्तवरा देवी वरमेनमयाचत।
विवासनं च रामस्य भरतस्याभिषेचनम्। २२
स सत्यवचनाद् राजा धर्मपाशेन संयतः।
विवासयामास सुतं रामं दशरथः प्रियम्। २३
स जगाम वनं वीरः प्रतिज्ञामनुपालयन्।
पितुर्वचननिर्देशात् कैकेय्याः प्रियकारणात्। २४
तं व्रजन्तं प्रियो भ्राता लक्ष्मणोऽनुजगाम ह।
स्नेहाद् विनयसम्पन्नः सुमित्रानन्दवर्धनः। २५
भ्रातरं दयितो भ्रातुः सौभ्रात्रमनुदर्शयन्।
रामस्य दयिता भार्या नित्यं प्राणसमा हिता। २६
जनकस्य कुले जाता देवमायेव निर्मिता।
सर्वलक्षणसम्पन्ना नारीणामुत्तमा वधूः। २७
सीताप्यनुगता रामं शशिनं रोहिणी यथा।
पौरैरनुगतो दूरं पित्रा दशरथेन च। २८
शृङ्गवेरपुरे सूतं गङ्गाकूले व्यसर्जयत्।
गुहमासाद्य धर्मात्मा निषादाधिपतिं प्रियम्। २९
गुहेन सहितो रामो लक्ष्मणेन च सीतया।
ते वनेन वनं गत्वा नदीस्तीर्त्वा बहूदकाः। ३०

चित्रकूटमनुप्राप्य भरद्वाजस्य शासनात्।
रम्यमावसथं कृत्वा रममाणा वने त्रयः। ३१
देवगन्धर्वसंकाशास्तत्र ते न्यवसन् सुखम्।
चित्रकूटं गते रामे पुत्रशोकातुरस्तदा। ३२
राजा दशरथः स्वर्गं जगाम विलपन् सुतम्।
गते तु तस्मिन् भरतो वसिष्ठप्रमुखैर्द्विजैः। ३३
नियुज्यमानो राज्याय नैच्छद् राज्यं महाबलः।
स जगाम वनं वीरो रामपादप्रसादकः। ३४
गत्वा तु स महात्मानं रामं सत्यपराक्रमम्।
अयाचद् भ्रातरं राममार्यभावपुरस्कृतः। ३५
त्वमेव राजा धर्मज्ञ इति रामं वचोऽब्रवीत्।
रामोऽपि परमोदारः सुमुखः सुमहायशाः। ३६
न चैच्छत् पितुरादेशाद् राज्यं रामो महाबलः।
पादुके चास्य राज्याय न्यासं दत्त्वा पुनः पुनः। ३७
निवर्तयामास ततो भरतं भरताग्रजः।
स काममनवाप्यैव रामपादावुपस्पृशन्। ३८
नन्दिग्रामेऽकरोद् राज्यं रामागमनकाङ्क्षया।
गते तु भरते श्रीमान् सत्यसंधो जितेन्द्रियः। ३९
रामस्तु पुनरालक्ष्य नागरस्य जनस्य च।
तत्रागमनमेकाग्रो दण्डकान् प्रविवेश ह। ४०
प्रविश्य तु महारण्यं रामो राजीवलोचनः।
विराधं राक्षसं हत्वा शरभङ्गं ददर्श ह। ४१
सुतीक्ष्णं चाप्यगस्त्यं च अगस्त्यभ्रातरं तथा।
अगस्त्यवचनाच्चैव जग्राहैन्द्रं शरासनम्। ४२
खड्गं च परमप्रीतस्तूणी चाक्षयसायकौ।
वसतस्तस्य रामस्य वने वनचरैः सह। ४३
ऋषयोऽभ्यागमन् सर्वे वधायासुररक्षसाम्।
स तेषां प्रतिशुश्राव राक्षसानां तदा वने। ४४
प्रतिज्ञातश्च रामेण वधः संयति रक्षसाम्।
ऋषीणामग्निकल्पानां दण्डकारण्यवासिनाम्। ४५
तेन तत्रैव वसता जनस्थाननिवासिनी।
विरूपिता शूर्पणखा राक्षसी कामरूपिणी। ४६
ततः शूर्पणखावाक्यादुद्युक्तान् सर्वराक्षसान्।
खरं त्रिशिरसं चैव दूषणं चैव राक्षसम्। ४७
निजघान रणे रामस्तेषां चैव पदानुगान्।
वने तस्मिन् निवसता जनस्थाननिवासिनाम्। ४८
रक्षसां निहतान्यासन् सहस्राणि चतुर्दश।
ततो ज्ञातिवधं श्रुत्वा रावणः क्रोधमूर्च्छितः। ४९
सहायं वरयामास मारीचं नाम राक्षसम्।
वार्यमाणः सुबहुशो मारीचेन स रावणः। ५०
न विरोधो बलवता क्षमो रावण तेन ते।
अनादृत्य तु तद्वाक्यं रावणः कालचोदितः। ५१
जगाम सहमारीचस्तस्याश्रमपदं तदा।
तेन मायाविना दूरमपवाह्य नृपात्मजौ। ५२
जहार भार्यां रामस्य गृध्रं हत्वा जटायुषम्।
गृध्रं च निहतं दृष्ट्वा हृतां श्रुत्वा च मैथिलीम्। ५३
राघवः शोकसंतप्तो विललापाकुलेन्द्रियः।
ततस्तेनैव शोकेन गृध्रं दग्ध्वा जटायुषम्। ५४
मार्गमाणो वने सीतां राक्षसं संददर्श ह।
कबन्धं नाम रूपेण विकृतं घोरदर्शनम्। ५५
तं निहत्य महाबाहुर्ददाह स्वर्गतश्च सः।
स चास्य कथयामास शबरीं धर्मचारिणीम्। ५६
श्रमणां धर्मनिपुणामभिगच्छेति राघव।
सोऽभ्यगच्छन्महातेजाः शबरीं शत्रुसूदनः। ५७
शबर्या पूजितः सम्यग् रामो दशरथात्मजः।
पम्पातीरे हनुमता सङ्गतो वानरेण ह। ५८
हनुमद्वचनाच्चैव सुग्रीवेण समागतः।
सुग्रीवाय च तत्सर्वं शंसद्रामो महाबलः। ५९
आदितस्तद् यथावृत्तं सीतायाश्च विशेषतः।
सुग्रीवश्चापि तत्सर्वं श्रुत्वा रामस्य वानरः। ६०
चकार सख्यं रामेण प्रीतश्चैवाग्निसाक्षिकम्।
ततो वानरराजेन वैरानुकथनं प्रति। ६१
रामायावेदितं सर्वं प्रणयाद् दुःखितेन च।
प्रतिज्ञातं च रामेण तदा वालिवधं प्रति। ६२
वालिनश्च बलं तत्र कथयामास वानरः।
सुग्रीवः शङ्कितश्चासीन्नित्यं वीर्येण राघवे। ६३
राघवप्रत्ययार्थं तु दुन्दुभेः कायमुत्तमम्।
दर्शयामास सुग्रीवो महापर्वतसंनिभम्। ६४
उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्थि महाबलः।
पादाङ्गुष्ठेन चिक्षेप सम्पूर्णं दशयोजनम्। ६५
बिभेद च पुनस्तालान् सप्तैकेन महेषुणा।
गिरिं रसातलं चैव जनयन् प्रत्ययं तदा। ६६
ततः प्रीतमनास्तेन विश्वस्तः स महाकपिः।
किष्किन्धां रामसहितो जगाम च गुहां तदा। ६७
ततोऽगर्जद्धरिवरः सुग्रीवो हेमपिङ्गलः।
तेन नादेन महता निर्जगाम हरीश्वरः। ६८

अनुमान्य तदा तारां सुग्रीवेण समागतः।
निजघान च तत्रैनं शरेणैकेन राघवः। ६९
ततः सुग्रीववचनाद्धत्वा वालिनमाहवे।
सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयत्। ७०
स च सर्वान् समानीय वानरान् वानरर्षभः।
दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजाम्। ७१
ततो गृध्रस्य वचनात् सम्पातेर्हनुमान् बली।
शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवम्। ७२
तत्र लङ्कां समासाद्य पुरीं रावणपालिताम्।
ददर्श सीतां ध्यायन्तीमशोकवनिकां गताम्। ७३
निवेदयित्वाभिज्ञानं प्रवृत्तिं विनिवेद्य च।
समाश्वास्य च वैदेहीं मर्दयामास तोरणम्। ७४
पञ्च सेनाग्रगान् हत्वा सप्त मन्त्रिसुतानपि।
शूरमक्षं च निष्पिष्य ग्रहणं समुपागमत्। ७५
अस्त्रेणोन्मुक्तमात्मानं ज्ञात्वा पैतामहाद् वरात्।
मर्षयन् राक्षसान् वीरो यन्त्रिणस्तान् यदृच्छया। ७६
ततो दग्ध्वा पुरीं लङ्कामृते सीतां च मैथिलीम्।
रामाय प्रियमाख्यातुं पुनरायान्महाकपिः। ७७
सोऽभिगम्य महात्मानं कृत्वा रामं प्रदक्षिणम्।
न्यवेदयदमेयात्मा दृष्टा सीतेति तत्त्वतः। ७८
ततः सुग्रीवसहितो गत्वा तीरं महोदधेः।
समुद्रं क्षोभयामास शरैरादित्यसंनिभैः। ७९
दर्शयामास चात्मानं समुद्रः सरितां पतिः।
समुद्रवचनाच्चैव नलं सेतुमकारयत्। ८०
तेन गत्वा पुरीं लङ्कां हत्वा रावणमाहवे।
रामः सीतामनुप्राप्य परां व्रीडामुपागमत्। ८१
तामुवाच ततो रामः परुषं जनसंसदि।
अमृष्यमाणा सा सीता विवेश ज्वलनं सती। ८२
ततोऽग्निवचनात् सीतां ज्ञात्वा विगतकल्मषाम्।
कर्मणा तेन महता त्रैलोक्यं सचराचरम्। ८३
सदेवर्षिगणं तुष्टं राघवस्य महात्मनः।
बभौ रामः सम्प्रहृष्टः पूजितः सर्वदैवतैः। ८४
अभिषिच्य च लङ्कायां राक्षसेन्द्रं विभीषणम्।
कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह। ८५
देवताभ्यो वरं प्राप्य समुत्थाप्य च वानरान्।
अयोध्यां प्रस्थितो रामः पुष्पकेण सुहृद्वृतः। ८६
भरद्वाजाश्रमं गत्वा रामः सत्यपराक्रमः।
भरतस्यान्तिके रामो हनूमन्तं व्यसर्जयत्। ८७
पुनराख्यायिकां जल्पन् सुग्रीवसहितस्तदा।
पुष्पकं तत् समारुह्य नन्दिग्रामं ययौ तदा। ८८
नन्दिग्रामे जटां हित्वा भ्रातृभिः सहितोऽनघः।
रामः सीतामनुप्राप्य राज्यं पुनरवाप्तवान्। ८९
प्रहृष्टमुदितो लोकस्तुष्टः पुष्टः सुधार्मिकः।
निरामयो ह्यरोगश्च दुर्भिक्षभयवर्जितः। ९०
न पुत्रमरणं केचिद् द्रक्ष्यन्ति पुरुषाः क्वचित्।
नार्यश्चाविधवा नित्यं भविष्यन्ति पतिव्रताः। ९१
न चाग्निजं भयं किंचिन्नाप्सु मज्जन्ति जन्तवः।
न वातजं भयं किंचिन्नापि ज्वरकृतं तथा। ९२
न चापि क्षुद्भयं तत्र न तस्करभयं तथा।
नगराणि च राष्ट्राणि धनधान्ययुतानि च। ९३
नित्यं प्रमुदिताः सर्वे यथा कृतयुगे तथा।
अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः। ९४
गवां कोट्ययुतं दत्त्वा विद्वद्भ्यो विधिपूर्वकम्।
असंख्येयं धनं दत्त्वा ब्राह्मणेभ्यो महायशाः। ९५
राजवंशाञ्छतगुणान् स्थापयिष्यति राघवः।
चातुर्वर्ण्यं च लोकेऽस्मिन् स्वे स्वे धर्मे नियोक्ष्यति। ९६
दशवर्षसहस्राणि दशवर्षशतानि च।
रामो राज्यमुपासित्वा ब्रह्मलोकं प्रयास्यति। ९७
इदं पवित्रं पापघ्नं पुण्यं वेदैश्च सम्मितम्।
यः पठेद् रामचरितं सर्वपापैः प्रमुच्यते। ९८
एतदाख्यानमायुष्यं पठन् रामायणं नरः।
सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीयते। ९९
पठन् द्विजो वागृषभत्वमीयात्
स्यात् क्षत्रियो भूमिपतित्वमीयात्।
वणिग्जनः पण्यफलत्वमीया-
ज्जनश्च शूद्रोऽपि महत्त्वमीयात्॥ १००॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे प्रथमः सर्गः॥ १॥

# द्वितीयः सर्गः

## रामायणकाव्यस्योपक्रमः—तमसातटे क्रौञ्चवधात् संतप्तस्य वाल्मीकेः शोकस्य श्लोकरूपतया प्रकटनं, ब्रह्मणस्तं प्रति रामचरितमयकाव्यनिर्माणार्थमादेशः

नारदस्य तु तद् वाक्यं श्रुत्वा वाक्यविशारदः।
पूजयामास धर्मात्मा सहशिष्यो महामुनिम्। १
यथावत् पूजितस्तेन देवर्षिर्नारदस्तथा।
आपृच्छ्यैवाभ्यनुज्ञातः स जगाम विहायसम्। २
स मुहूर्तं गते तस्मिन् देवलोकं मुनिस्तदा।
जगाम तमसातीरं जाह्नव्यास्त्वविदूरतः। ३
स तु तीरं समासाद्य तमसाया मुनिस्तदा।
शिष्यमाह स्थितं पार्श्वे दृष्ट्वा तीर्थमकर्दमम्। ४
अकर्दममिदं तीर्थं भरद्वाज निशामय।
रमणीयं प्रसन्नाम्बु सन्मनुष्यमनो यथा। ५
न्यस्यतां कलशस्तात दीयतां वल्कलं मम।
इदमेवावगाहिष्ये तमसातीर्थमुत्तमम्। ६
एवमुक्तो भरद्वाजो वाल्मीकेन महात्मना।
प्रायच्छत मुनेस्तस्य वल्कलं नियतो गुरोः। ७
स शिष्यहस्तादादाय वल्कलं नियतेन्द्रियः।
विचचार ह पश्यंस्तत् सर्वतो विपुलं वनम्। ८
तस्याभ्याशे तु मिथुनं चरन्तमनपायिनम्।
ददर्श भगवांस्तत्र क्रौञ्चयोश्चारुनिःस्वनम्। ९
तस्मात् तु मिथुनादेकं पुमांसं पापनिश्चयः।
जघान वैरनिलयो निषादस्तस्य पश्यतः। १०
तं शोणितपरीताङ्गं चेष्टमानं महीतले।
भार्या तु निहतं दृष्ट्वा रुराव करुणां गिरम्। ११
वियुक्ता पतिना तेन द्विजेन सहचारिणा।
ताम्रशीर्षेण मत्तेन पत्रिणा सहितेन वै। १२
तथाविधं द्विजं दृष्ट्वा निषादेन निपातितम्।
ऋषेर्धर्मात्मनस्तस्य कारुण्यं समपद्यत। १३
ततः करुणवेदित्वादधर्मोऽयमिति द्विजः।
निशाम्य रुदतीं क्रौञ्चीमिदं वचनमब्रवीत्। १४
मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम्। १५
तस्येत्थं ब्रुवतश्चिन्ता बभूव हृदि वीक्षतः।
शोकार्तेनास्य शकुनेः किमिदं व्याहृतं मया। १६
चिन्तयन् स महाप्राज्ञश्चकार मतिमान्मतिम्।
शिष्यं चैवाब्रवीद् वाक्यमिदं स मुनिपुङ्गवः। १७
पादबद्धोऽक्षरसमस्तन्त्रीलयसमन्वितः।
शोकार्तस्य प्रवृत्तो मे श्लोको भवतु नान्यथा। १८
शिष्यस्तु तस्य ब्रुवतो मुनेर्वाक्यमनुत्तमम्।
प्रतिजग्राह संतुष्टस्तस्य तुष्टोऽभवन्मुनिः। १९
सोऽभिषेकं ततः कृत्वा तीर्थे तस्मिन् यथाविधि।
तमेव चिन्तयन्नर्थमुपावर्तत वै मुनिः। २०
भरद्वाजस्ततः शिष्यो विनीतः श्रुतवान् गुरोः।
कलशं पूर्णमादाय पृष्ठतोऽनुजगाम ह। २१
स प्रविश्याश्रमपदं शिष्येण सह धर्मवित्।
उपविष्टः कथाश्चान्याश्चकार ध्यानमास्थितः। २२
आजगाम ततो ब्रह्मा लोककर्ता स्वयं प्रभुः।
चतुर्मुखो महातेजा द्रष्टुं तं मुनिपुङ्गवम्। २३
वाल्मीकिरथ तं दृष्ट्वा सहसोत्थाय वाग्यतः।
प्राञ्जलिः प्रयतो भूत्वा तस्थौ परमविस्मितः। २४
पूजयामास तं देवं पाद्यार्घ्यासनवन्दनैः।
प्रणम्य विधिवच्चैनं पृष्ट्वा चैव निरामयम्। २५
अथोपविश्य भगवानासने परमार्चिते।
वाल्मीकये च ऋषये संदिदेशासनं ततः। २६
ब्रह्मणा समनुज्ञातः सोऽप्युपाविशदासने।
उपविष्टे तदा तस्मिन् साक्षाल्लोकपितामहे। २७
तद्गतेनैव मनसा वाल्मीकिर्ध्यानमास्थितः।
पापात्मना कृतं कष्टं वैरग्रहणबुद्धिना। २८
यत् तादृशं चारुरवं क्रौञ्चं हन्यादकारणात्।
शोचन्नेव पुनः क्रौञ्चीमुपश्लोकमिमं जगौ। २९
पुनरन्तर्गतमना भूत्वा शोकपरायणः।
तमुवाच ततो ब्रह्मा प्रहसन् मुनिपुङ्गवम्। ३०
श्लोक एवास्त्वयं बद्धो नात्र कार्या विचारणा।
मच्छन्दादेव ते ब्रह्मन् प्रवृत्तेयं सरस्वती। ३१
रामस्य चरितं कृत्स्नं कुरु त्वमृषिसत्तम।
धर्मात्मनो भगवतो लोके रामस्य धीमतः। ३२
वृत्तं कथय धीरस्य यथा ते नारदाच्छ्रुतम्।
रहस्यं च प्रकाशं च यद् वृत्तं तस्य धीमतः। ३३
रामस्य सहसौमित्रे राक्षसानां च सर्वशः।
वैदेह्याश्चैव यद् वृत्तं प्रकाशं यदि वा रहः। ३४

तच्चाप्यविदितं सर्वं विदितं ते भविष्यति।
न ते वागनृता काव्ये काचिदत्र भविष्यति। ३५
कुरु रामकथां पुण्यां श्लोकबद्धां मनोरमाम्।
यावत् स्थास्यन्ति गिरयः सरितश्च महीतले। ३६
तावद् रामायणकथा लोकेषु प्रचरिष्यति।
यावद् रामस्य च कथा त्वत्कृता प्रचरिष्यति। ३७
तावदूर्ध्वमधश्च त्वं मल्लोकेषु निवत्स्यसि।
इत्युक्त्वा भगवान् ब्रह्मा तत्रैवान्तरधीयत।
ततः सशिष्यो भगवान् मुनिर्विस्मयमाययौ। ३८
तस्य शिष्यास्ततः सर्वे जगुः श्लोकमिमं पुनः।
मुहुर्मुहुः प्रीयमाणाः प्राहुश्च भृशविस्मिताः। ३९
समाक्षरैश्चतुर्भिर्यः पादैर्गीतो महर्षिणा।
सोऽनुव्याहरणाद् भूयः शोकः श्लोकत्वमागतः। ४०
तस्य बुद्धिरियं जाता महर्षेर्भावितात्मनः।
कृत्स्नं रामायणं काव्यमीदृशैः करवाण्यहम्। ४१
उदारवृत्तार्थपदैर्मनोरमै-
स्तदास्य रामस्य चकार कीर्तिमान्।
समाक्षरैः श्लोकशतैर्यशस्विनो
यशस्करं काव्यमुदारदर्शनः। ४२
तदुपगतसमाससंधियोगं
सममधुरोपनतार्थवाक्यबद्धम्।
रघुवरचरितं मुनिप्रणीतं
दशशिरसश्च वधं निशामयध्वम्। ४३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे द्वितीयः सर्गः॥ २॥

# तृतीयः सर्गः

## रामायणकाव्यगतानां विषयाणां संक्षेपेणोल्लेखः

श्रुत्वा वस्तु समग्रं तद्धर्मार्थसहितं हितम्।
व्यक्तमन्वेषते भूयो यद् वृत्तं तस्य धीमतः। १
उपस्पृश्योदकं सम्यङ्मुनिः स्थित्वा कृताञ्जलिः।
प्राचीनाग्रेषु दर्भेषु धर्मेणान्वेषते गतिम्। २
रामलक्ष्मणसीताभी राज्ञा दशरथेन च।
सभार्येण सराष्ट्रेण यत् प्राप्तं तत्र तत्त्वतः। ३
हसितं भाषितं चैव गतिर्यावच्च चेष्टितम्।
तत् सर्वं धर्मवीर्येण यथावत् सम्प्रपश्यति। ४
स्त्रीतृतीयेन च तथा यत् प्राप्तं चरता वने।
सत्यसंधेन रामेण तत् सर्वं चान्ववैक्षत। ५
ततः पश्यति धर्मात्मा तत् सर्वं योगमास्थितः।
पुरा यत् तत्र निर्वृत्तं पाणावामलकं यथा। ६
तत् सर्वं तत्त्वतो दृष्ट्वा धर्मेण स महामतिः।
अभिरामस्य रामस्य तत् सर्वं कर्तुमुद्यतः। ७
कामार्थगुणसंयुक्तं धर्मार्थगुणविस्तरम्।
समुद्रमिव रत्नाढ्यं सर्वश्रुतिमनोहरम्। ८
स यथा कथितं पूर्वं नारदेन महात्मना।
रघुवंशस्य चरितं चकार भगवान् मुनिः। ९
जन्म रामस्य सुमहद्वीर्यं सर्वानुकूलताम्।
लोकस्य प्रियतां क्षान्तिं सौम्यतां सत्यशीलताम्। १०
नाना चित्राः कथाश्चान्या विश्वामित्रसहायने।
जानक्याश्च विवाहं च धनुषश्च विभेदनम्। ११
रामरामविवादं च गुणान् दाशरथेस्तथा।
तथाभिषेकं रामस्य कैकेय्या दुष्टभावताम्। १२
विघातं चाभिषेकस्य रामस्य च विवासनम्।
राज्ञः शोकं विलापं च परलोकस्य चाश्रयम्। १३
प्रकृतीनां विषादं च प्रकृतीनां विसर्जनम्।
निषादाधिपसंवादं सूतोपावर्तनं तथा। १४
गङ्गायाश्चापि संतारं भरद्वाजस्य दर्शनम्।
भरद्वाजाभ्यनुज्ञानाच्चित्रकूटस्य दर्शनम्। १५
वास्तुकर्म निवेशं च भरतागमनं तथा।
प्रसादनं च रामस्य पितुश्च सलिलक्रियाम्। १६
पादुकाग्र्याभिषेकं च नन्दिग्रामनिवासनम्।
दण्डकारण्यगमनं विराधस्य वधं तथा। १७
दर्शनं शरभङ्गस्य सुतीक्ष्णेन समागमम्।
अनसूयासमाख्यां च अङ्गरागस्य चार्पणम्। १८
दर्शनं चाप्यगस्त्यस्य धनुषो ग्रहणं तथा।
शूर्पणख्याश्च संवादं विरूपकरणं तथा। १९
वधं खरत्रिशिरसोरुत्थानं रावणस्य च।
मारीचस्य वधं चैव वैदेह्या हरणं तथा। २०

राघवस्य विलापं च गृध्रराजनिबर्हणम्।
कबन्धदर्शनं चैव पम्पायाश्चापि दर्शनम्। २१
शबरीदर्शनं चैव फलमूलाशनं तथा।
प्रलापं चैव पम्पायां हनूमद्दर्शनं तथा। २२
ऋष्यमूकस्य गमनं सुग्रीवेण समागमम्।
प्रत्ययोत्पादनं सख्यं वालिसुग्रीवविग्रहम्। २३
वालिप्रमथनं चैव सुग्रीवप्रतिपादनम्।
ताराविलापं समयं वर्षरात्रनिवासनम्। २४
कोपं राघवसिंहस्य बलानामुपसंग्रहम्।
दिशः प्रस्थापनं चैव पृथिव्याश्च निवेदनम्। २५
अङ्गुलीयकदानं च ऋक्षस्य बिलदर्शनम्।
प्रायोपवेशनं चैव सम्पातेश्चापि दर्शनम्। २६
पर्वतारोहणं चैव सागरस्यापि लङ्घनम्।
समुद्रवचनाच्चैव मैनाकस्य च दर्शनम्। २७
राक्षसीतर्जनं चैव च्छायाग्राहस्य दर्शनम्।
सिंहिकायाश्च निधनं लङ्कामलयदर्शनम्। २८
रात्रौ लङ्काप्रवेशं च एकस्यापि विचिन्तनम्।
आपानभूमिगमनमवरोधस्य दर्शनम्। २९
दर्शनं रावणस्यापि पुष्पकस्य च दर्शनम्।
अशोकवनिकायानं सीतायाश्चापि दर्शनम्। ३०
अभिज्ञानप्रदानं च सीतायाश्चापि भाषणम्।
राक्षसीतर्जनं चैव त्रिजटास्वप्नदर्शनम्। ३१
मणिप्रदानं सीताया वृक्षभङ्गं तथैव च।
राक्षसीविद्रवं चैव किंकराणां निबर्हणम्। ३२
ग्रहणं वायुसूनोश्च लङ्कादाहाभिगर्जनम्।
प्रतिप्लवनमेवाथ मधूनां हरणं तथा। ३३
राघवाश्वासनं चैव मणिनिर्यातनं तथा।
संगमं च समुद्रेण नलसेतोश्च बन्धनम्। ३४
प्रतारं च समुद्रस्य रात्रौ लङ्कावरोधनम्।
विभीषणेन संसर्गं वधोपायनिवेदनम्। ३५
कुम्भकर्णस्य निधनं मेघनादनिबर्हणम्।
रावणस्य विनाशं च सीतावाप्तिमरेः पुरे। ३६
विभीषणाभिषेकं च पुष्पकस्य च दर्शनम्।
अयोध्यायाश्च गमनं भरद्वाजसमागमम्। ३७
प्रेषणं वायुपुत्रस्य भरतेन समागमम्।
रामाभिषेकाभ्युदयं सर्वसैन्यविसर्जनम्।
स्वराष्ट्ररञ्जनं चैव वैदेह्याश्च विसर्जनम्। ३८
अनागतं च यत् किंचिद् रामस्य वसुधातले।
तच्चकारोत्तरे काव्ये वाल्मीकिर्भगवानृषिः। ३९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे तृतीयः सर्गः॥ ३॥

# चतुर्थः सर्गः

## वाल्मीकिश्चतुर्विंशतिसहस्रश्लोकयुतं रामायणं काव्यं निर्माय कुशीलवौ तदध्यापयत्, तयो रामायणगानं श्रुत्वा मुनिभिः प्रशंसनमयोध्यायां श्रीरामेण सम्मानिताभ्यां ताभ्यां तदीयराजसभायां रामायणगानश्रावणम्

प्राप्तराजस्य रामस्य वाल्मीकिर्भगवानृषिः।
चकार चरितं कृत्स्नं विचित्रपदमर्थवत्। १
चतुर्विंशत्सहस्राणि श्लोकानामुक्तवानृषिः।
तथा सर्गशतान् पञ्च षट्काण्डानि तथोत्तरम्। २
कृत्वा तु तन्महाप्राज्ञः सभविष्यं सहोत्तरम्।
चिन्तयामास को न्वेतत् प्रयुञ्जीयादिति प्रभुः। ३
तस्य चिन्तयमानस्य महर्षेर्भावितात्मनः।
अगृह्णीतां ततः पादौ मुनिवेषौ कुशीलवौ। ४
कुशीलवौ तु धर्मज्ञौ राजपुत्रौ यशस्विनौ।
भ्रातरौ स्वरसम्पन्नौ ददर्शाश्रमवासिनौ। ५
स तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ।
वेदोपबृंहणार्थाय तावग्राहयत प्रभुः। ६
काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत्।
पौलस्त्यवधमित्येवं चकार चरितव्रतः। ७
पाठ्ये गेये च मधुरं प्रमाणैस्त्रिभिरन्वितम्।
जातिभिः सप्तभिर्युक्तं तन्त्रीलयसमन्वितम्। ८
रसैः शृङ्गारकरुणहास्यरौद्रभयानकैः।
वीरादिभी रसैर्युक्तं काव्यमेतदगायताम्। ९
तौ तु गान्धर्वतत्त्वज्ञौ स्थानमूर्च्छनकोविदौ।
भ्रातरौ स्वरसम्पन्नौ गन्धर्वाविव रूपिणौ। १०

रूपलक्षणसम्पन्नौ मधुरस्वरभाषिणौ।
बिम्बादिवोत्थितौ बिम्बौ रामदेहात् तथापरौ।११
तौ राजपुत्रौ कार्त्स्न्येन धर्म्यमाख्यानमुत्तमम्।
वाचोविधेयं तत्सर्वं कृत्वा काव्यमनिन्दितौ।१२
ऋषीणां च द्विजातीनां साधूनां च समागमे।
यथोपदेशं तत्त्वज्ञौ जगतुः सुसमाहितौ।१३
महात्मानौ महाभागौ सर्वलक्षणलक्षितौ।
तौ कदाचित् समेतानामृषीणां भावितात्मनाम्।१४
मध्ये सभं समीपस्थाविदं काव्यमगायताम्।
तच्छ्रुत्वा मुनयः सर्वे बाष्पपर्याकुलेक्षणाः।१५
साधु साध्विति तावूचुः परं विस्मयमागताः।
ते प्रीतिमनसः सर्वे मुनयो धर्मवत्सलाः।१६
प्रशशंसुः प्रशस्तव्यौ गायमानौ कुशीलवौ।
अहो गीतस्य माधुर्यं श्लोकानां च विशेषतः।१७
चिरनिर्वृत्तमप्येतत् प्रत्यक्षमिव दर्शितम्।
प्रविश्य तावुभौ सुष्ठु तथाभावमगायताम्।१८
सहितौ मधुरं रक्तं सम्पन्नं स्वरसम्पदा।
एवं प्रशस्यमानौ तौ तपः श्लाघ्यैर्महर्षिभिः।१९
संरक्ततरमत्यर्थं मधुरं तावगायताम्।
प्रीतः कश्चिन्मुनिस्ताभ्यां संस्थितः कलशं ददौ।२०
प्रसन्नो वल्कलं कश्चिद् ददौ ताभ्यां महायशाः।
अन्यः कृष्णाजिनमदाद् यज्ञसूत्रं तथापरः।२१
कश्चित् कमण्डलुं प्रादान्मौञ्जीमन्यो महामुनिः।
बृसीमन्यस्तदा प्रादात् कौपीनमपरो मुनिः।२२
ताभ्यां ददौ तदा हृष्टः कुठारमपरो मुनिः।
काषायमपरो वस्त्रं चीरमन्यो ददौ मुनिः।२३
जटाबन्धनमन्यस्तु काष्ठरज्जुं मुदान्वितः।
यज्ञभाण्डमृषिः कश्चित् काष्ठभारं तथापरः।२४
औदुम्बरीं बृसीमन्यः स्वस्ति केचित् तदावदन्।
आयुष्यमपरे प्राहुर्मुदा तत्र महर्षयः।२५
ददुश्चैवं वरान् सर्वे मुनयः सत्यवादिनः।
आश्चर्यमिदमाख्यानं मुनिना सम्प्रकीर्तितम्।२६
परं कवीनामाधारं समाप्तं च यथाक्रमम्।
अभिगीतमिदं गीतं सर्वगीतिषु कोविदौ।२७
आयुष्यं पुष्टिजननं सर्वश्रुतिमनोहरम्।
प्रशस्यमानौ सर्वत्र कदाचित् तत्र गायकौ।२८
रथ्यासु राजमार्गेषु ददर्श भरताग्रजः।
स्ववेश्म चानीय ततो भ्रातरौ स कुशीलवौ।२९
पूजयामास पूजार्हौ रामः शत्रुनिबर्हणः।
आसीनः काञ्चने दिव्ये स च सिंहासने प्रभुः।३०
उपोपविष्टैः सचिवैर्भ्रातृभिश्च समन्वितः।
दृष्ट्वा तु रूपसम्पन्नौ विनीतौ भ्रातरावुभौ।३१
उवाच लक्ष्मणं रामः शत्रुघ्नं भरतं तथा।
श्रूयतामितदाख्यानमनयोर्देववर्चसोः ।३२
विचित्रार्थपदं सम्यग्गायकौ समचोदयत्।
तौ चापि मधुरं रक्तं स्वचित्तायतनिःस्वनम्।३३
तन्त्रीलयवदत्यर्थं विश्रुतार्थमगायताम्।
ह्लादयत् सर्वगात्राणि मनांसि हृदयानि च।
श्रोत्राश्रयसुखं गेयं तद् बभौ जनसंसदि।३४
इमौ मुनी पार्थिवलक्षणान्वितौ
कुशीलवौ चैव महातपस्विनौ।
ममापि तद् भूतिकरं प्रचक्षते
महानुभावं चरितं निबोधत।३५
ततस्तु तौ रामवचःप्रचोदिता-
वगायतां मार्गविधानसम्पदा।
स चापि रामः परिषद्गतः शनै-
र्बुभूषयासक्तमना बभूव।३६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे चतुर्थः सर्गः॥ ४॥

# पञ्चमः सर्गः

## दशरथपालिताया अयोध्याया उत्कर्षस्य वर्णनम्

सर्वा पूर्वमियं येषामासीत् कृत्स्ना वसुंधरा।
प्रजापतिमुपादाय नृपाणां जयशालिनाम्। १
येषां स सगरो नाम सागरो येन खानितः।
षष्टिपुत्रसहस्राणि यं यान्तं पर्यवारयन्। २
इक्ष्वाकूणामिदं तेषां राज्ञां वंशे महात्मनाम्।
महदुत्पन्नमाख्यानं रामायणमिति श्रुतम्। ३
तदिदं वर्तयिष्यावः सर्वं निखिलमादितः।
धर्मकामार्थसहितं श्रोतव्यमनसूयता। ४

कोशलो नाम मुदितः स्फीतो जनपदो महान्।
निविष्टः सरयूतीरे प्रभूतधनधान्यवान्। ५
अयोध्या नाम नगरी तत्रासील्लोकविश्रुता।
मनुना मानवेन्द्रेण या पुरी निर्मिता स्वयम्। ६
आयता दश च द्वे च योजनानि महापुरी।
श्रीमती त्रीणि विस्तीर्णा सुविभक्तमहापथा। ७
राजमार्गेण महता सुविभक्तेन शोभिता।
मुक्तपुष्पावकीर्णेन जलसिक्तेन नित्यशः। ८
तां तु राजा दशरथो महाराष्ट्रविवर्धनः।
पुरीमावासयामास दिवि देवपतिर्यथा। ९
कपाटतोरणवतीं सुविभक्तान्तरापणाम्।
सर्वयन्त्रायुधवतीमुषितां सर्वशिल्पिभिः। १०
सूतमागधसम्बाधां श्रीमतीमतुलप्रभाम्।
उच्चाट्टालध्वजवतीं शतघ्नीशतसंकुलाम्। ११
वधूनाटकसंघैश्च संयुक्तां सर्वतः पुरीम्।
उद्यानाम्रवणोपेतां महतीं सालमेखलाम्। १२
दुर्गगम्भीरपरिखां दुर्गामन्यैर्दुरासदाम्।
वाजिवारणसम्पूर्णां गोभिरुष्ट्रैः खरैस्तथा। १३
सामन्तराजसंघैश्च बलिकर्मभिरावृताम्।
नानादेशनिवासैश्च वणिग्भिरुपशोभिताम्। १४
प्रासादै रत्नविकृतैः पर्वतैरिव शोभिताम्।
कूटागारैश्च सम्पूर्णामिन्द्रस्येवामरावतीम्। १५
चित्रामष्टापदाकारां वरनारीगणायुताम्।
सर्वरत्नसमाकीर्णां विमानगृहशोभिताम्। १६
गृहगाढामविच्छिद्रां समभूमौ निवेशिताम्।
शालितण्डुलसम्पूर्णामिक्षुकाण्डरसोदकाम्। १७
दुन्दुभीभिर्मृदङ्गैश्च वीणाभिः पणवैस्तथा।
नादितां भृशमत्यर्थं पृथिव्यां तामनुत्तमाम्। १८
विमानमिव सिद्धानां तपसाधिगतं दिवि।
सुनिवेशितवेश्मान्तां नरोत्तमसमावृताम्। १९
ये च बाणैर्न विध्यन्ति विविक्तमपरापरम्।
शब्दवेध्यं च विततं लघुहस्ता विशारदाः। २०
सिंहव्याघ्रवराहाणां मत्तानां नदतां वने।
हन्तारो निशितैः शस्त्रैर्बलाद् बाहुबलैरपि। २१
तादृशानां सहस्रैस्तामभिपूर्णां महारथैः।
पुरीमावासयामास राजा दशरथस्तदा। २२
तामग्निमद्भिर्गुणवद्भिरावृतां
द्विजोत्तमैर्वेदषडङ्गपारगैः।
सहस्रदैः सत्यरतैर्महात्मभि-
र्महर्षिकल्पैर्ऋषिभिश्च केवलैः। २३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे पञ्चमः सर्गः॥ ५॥

# षष्ठः सर्गः

## राज्ञो दशरथस्य शासनकालेऽयोध्यायास्तत्रत्यजनानां चोत्कृष्टस्थितेर्वर्णनम्

तस्यां पुर्यामयोध्यायां वेदवित् सर्वसंग्रहः।
दीर्घदर्शी महातेजाः पौरजानपदप्रियः। १
इक्ष्वाकूणामतिरथो यज्वा धर्मपरो वशी।
महर्षिकल्पो राजर्षिस्त्रिषु लोकेषु विश्रुतः। २
बलवान् निहतामित्रो मित्रवान् विजितेन्द्रियः।
धनैश्च संचयैश्चान्यैः शक्रवैश्रवणोपमः। ३
यथा मनुर्महातेजा लोकस्य परिरक्षिता।
तथा दशरथो राजा लोकस्य परिरक्षिता। ४
तेन सत्याभिसंधेन त्रिवर्गमनुतिष्ठता।
पालिता सा पुरी श्रेष्ठा इन्द्रेणेवामरावती। ५
तस्मिन् पुरवरे हृष्टा धर्मात्मानो बहुश्रुताः।
नरास्तुष्टा धनैः स्वैः स्वैरलुब्धाः सत्यवादिनः। ६
नाल्पसंनिचयः कश्चिदासीत् तस्मिन् पुरोत्तमे।
कुटुम्बी यो ह्यसिद्धार्थोऽगवाश्वधनधान्यवान्। ७
कामी वा न कदर्यो वा नृशंसः पुरुषः क्वचित्।
द्रष्टुं शक्यमयोध्यायां नाविद्वान् न च नास्तिकः। ८
सर्वे नराश्च नार्यश्च धर्मशीलाः सुसंयताः।
मुदिताः शीलवृत्ताभ्यां महर्षय इवामलाः। ९
नाकुण्डली नामुकुटी नास्रग्वी नाल्पभोगवान्।
नामृष्टो न नलिप्ताङ्गो नासुगन्धश्च विद्यते। १०
नामृष्टभोजी नादाता नाप्यनङ्गदनिष्कधृक्।
नाहस्ताभरणो वापि दृश्यते नाप्यनात्मवान्। ११
नानाहिताग्निर्नायज्वा न क्षुद्रो वा न तस्करः।
कश्चिदासीदयोध्यायां न चावृत्तो न संकरः। १२
स्वकर्मनिरता नित्यं ब्राह्मणा विजितेन्द्रियाः।
दानाध्ययनशीलाश्च संयताश्च प्रतिग्रहे। १३

नास्तिको नानृती वापि न कश्चिदबहुश्रुतः।
नासूयको न चाशक्तो नाविद्वान् विद्यते क्वचित्।१४
नाषडङ्गविदत्रास्ति नाव्रतो नासहस्रदः।
न दीनः क्षिप्तचित्तो वा व्यथितो वापि कश्चन।१५
कश्चिन्नरो वा नारी वा नाश्रीमान् नाप्यरूपवान्।
द्रष्टुं शक्यमयोध्यायां नापि राजन्यभक्तिमान्।१६
वर्णेष्वग्र्यचतुर्थेषु देवतातिथिपूजकाः।
कृतज्ञाश्च वदान्याश्च शूरा विक्रमसंयुताः।१७
दीर्घायुषो नराः सर्वे धर्मं सत्यं च संश्रिताः।
सहिताः पुत्रपौत्रैश्च नित्यं स्त्रीभिः पुरोत्तमे।१८
क्षत्रं ब्रह्ममुखं चासीद् वैश्याः क्षत्रमनुव्रताः।
शूद्राः स्वकर्मनिरतास्त्रीन् वर्णानुपचारिणः।१९
सा तेनेक्ष्वाकुनाथेन पुरी सुपरिरक्षिता।
यथा पुरस्तान्मनुना मानवेन्द्रेण धीमता।२०
योधानामग्निकल्पानां पेशलानाममर्षिणाम्।
सम्पूर्णा कृतविद्यानां गुहा केसरिणामिव।२१
काम्बोजविषये जातैर्बाह्लीकैश्च हयोत्तमैः।
वनायुजैर्नदीजैश्च पूर्णा हरिहयोत्तमैः।२२
विन्ध्यपर्वतजैर्मत्तैः पूर्णा हैमवतैरपि।
मदान्वितैरतिबलैर्मातङ्गैः पर्वतोपमैः।२३
ऐरावतकुलीनैश्च महापद्मकुलैस्तथा।
अञ्जनादपि निष्क्रान्तैर्वामनादपि च द्विपैः।२४
भद्रैर्मन्द्रैर्मृगैश्चैव भद्रमन्द्रमृगैस्तथा।
भद्रमन्द्रैर्भद्रमृगैर्मृगमन्द्रैश्च सा पुरी।२५
नित्यमत्तैः सदा पूर्णा नागैरचलसंनिभैः।
सा योजने द्वे च भूयः सत्यनामा प्रकाशते।
यस्यां दशरथो राजा वसञ्जगदपालयत्।२६
तां पुरीं स महातेजा राजा दशरथो महान्।
शशास शमितामित्रो नक्षत्राणीव चन्द्रमाः।२७
तां सत्यनामां दृढतोरणार्गलां
गृहैर्विचित्रैरुपशोभितां शिवाम्।
पुरीमयोध्यां नृसहस्रसंकुलां
शशास वै शक्रसमो महीपतिः।२८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे षष्ठः सर्गः॥ ६॥

# सप्तमः सर्गः

## राजामात्यानां गुणानां नीतेश्च वर्णनम्

तस्यामात्या गुणैरासन्निक्ष्वाकोः सुमहात्मनः।
मन्त्रज्ञाश्चेङ्गितज्ञाश्च नित्यं प्रियहिते रताः। १
अष्टौ बभूवुर्वीरस्य तस्यामात्या यशस्विनः।
शुचयश्चानुरक्ताश्च राजकृत्येषु नित्यशः। २
धृष्टिर्जयन्तो विजयः सुराष्ट्रो राष्ट्रवर्धनः।
अकोपो धर्मपालश्च सुमन्त्रश्चाष्टमोऽर्थवित्। ३
ऋत्विजौ द्वावभिमतौ तस्यास्तामृषिसत्तमौ।
वसिष्ठो वामदेवश्च मन्त्रिणश्च तथापरे। ४
सुयज्ञोऽप्यथ जाबालिः काश्यपोऽप्यथ गौतमः।
मार्कण्डेयस्तु दीर्घायुस्तथा कात्यायनो द्विजः। ५
एतैर्ब्रह्मर्षिभिर्नित्यमृत्विजस्तस्य पौर्वकाः।
विद्याविनीता ह्रीमन्तः कुशला नियतेन्द्रियाः। ६
श्रीमन्तश्च महात्मानः शस्त्रज्ञा दृढविक्रमाः।
कीर्तिमन्तः प्रणिहिता यथावचनकारिणः। ७
तेजःक्षमायशःप्राप्ताः स्मितपूर्वाभिभाषिणः।
क्रोधात् कामार्थहेतोर्वा न ब्रूयुरनृतं वचः। ८
तेषामविदितं किंचित् स्वेषु नास्ति परेषु वा।
क्रियमाणं कृतं वापि चारेणापि चिकीर्षितम्। ९
कुशला व्यवहारेषु सौहृदेषु परीक्षिताः।
प्राप्तकालं यथा दण्डं धारयेयुः सुतेष्वपि।१०
कोशसंग्रहणे युक्ता बलस्य च परिग्रहे।
अहितं चापि पुरुषं न हिंस्युरविदूषकम्।११
वीराश्च नियतोत्साहा राजशास्त्रमनुष्ठिताः।
शुचीनां रक्षितारश्च नित्यं विषयवासिनाम्।१२
ब्रह्मक्षत्रमहिंसन्तस्ते कोशं समपूरयन्।
सुतीक्ष्णदण्डाः सम्प्रेक्ष्य पुरुषस्य बलाबलम्।१३
शुचीनामेकबुद्धीनां सर्वेषां सम्प्रजानताम्।
नासीत्पुरे वा राष्ट्रे वा मृषावादी नरः क्वचित्।१४
क्वचिन्न दुष्टस्तत्रासीत् परदाररतिर्नरः।
प्रशान्तं सर्वमेवासीद् राष्ट्रं पुरवरं च तत्।१५

सुवाससः सुवेषाश्च ते च सर्वे शुचिव्रताः।
हितार्थाश्च नरेन्द्रस्य जाग्रतो नयचक्षुषा। १६
गुरोर्गुणगृहीताश्च प्रख्याताश्च पराक्रमैः।
विदेशेष्वपि विज्ञाताः सर्वतो बुद्धिनिश्चयाः। १७
अभितो गुणवन्तश्च न चासन् गुणवर्जिताः।
संधिविग्रहतत्त्वज्ञाः प्रकृत्या सम्पदान्विताः। १८
मन्त्रसंवरणे शक्ताः शक्ताः सूक्ष्मासु बुद्धिषु।
नीतिशास्त्रविशेषज्ञाः सततं प्रियवादिनः। १९
ईदृशैस्तैरमात्यैश्च राजा दशरथोऽनघः।
उपपन्नो गुणोपेतैरन्वशासद् वसुन्धराम्। २०
अवेक्ष्यमाणश्चारेण प्रजा धर्मेण रक्षयन्।
प्रजानां पालनं कुर्वन्नधर्मं परिवर्जयन्। २१
विश्रुतस्त्रिषु लोकेषु वदान्यः सत्यसंगरः।
स तत्र पुरुषव्याघ्रः शशास पृथिवीमिमाम्। २२
नाध्यगच्छद्विशिष्टं वा तुल्यं वा शत्रुमात्मनः।
मित्रवान्नतसामन्तः प्रतापहतकण्टकः।
स शशास जगद् राजा दिवि देवपतिर्यथा। २३
तैर्मन्त्रिभिर्मन्त्रहिते निविष्टै-
वृतोऽनुरक्तैः कुशलैः समर्थैः।
स पार्थिवो दीप्तिमवाप युक्त-
स्तेजोमयैर्गोभिरिवोदितोऽर्कः। २४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये बालकाण्डे सप्तमः सर्गः॥ ७॥

# अष्टमः सर्गः

## पुत्रकामस्य राज्ञोऽश्वमेधाय प्रस्तावो मन्त्रिभिर्ब्राह्मणैश्च तस्यानुमोदनम्

तस्य चैवंप्रभावस्य धर्मज्ञस्य महात्मनः।
सुतार्थं तप्यमानस्य नासीद् वंशकरः सुतः। १
चिन्तयानस्य तस्यैवं बुद्धिरासीन्महात्मनः।
सुतार्थं वाजिमेधेन किमर्थं न यजाम्यहम्। २
स निश्चितां मतिं कृत्वा यष्टव्यमिति बुद्धिमान्।
मन्त्रिभिः सह धर्मात्मा सर्वैरपि कृतात्मभिः। ३
ततोऽब्रवीन्महातेजाः सुमन्त्रं मन्त्रिसत्तम।
शीघ्रमानय मे सर्वान् गुरूंस्तान् सपुरोहितान्। ४
ततः सुमन्त्रस्त्वरितं गत्वा त्वरितविक्रमः।
समानयत् स तान् सर्वान् समस्तान् वेदपारगान्। ५
सुयज्ञं वामदेवं च जाबालिमथ काश्यपम्।
पुरोहितं वसिष्ठं च ये चाप्यन्ये द्विजोत्तमाः। ६
तान् पूजयित्वा धर्मात्मा राजा दशरथस्तदा।
इदं धर्मार्थसहितं श्लक्ष्णं वचनमब्रवीत्। ७
मम लालप्यमानस्य सुतार्थं नास्ति वै सुखम्।
तदर्थं हयमेधेन यक्ष्यामीति मतिर्मम। ८
तदहं यष्टुमिच्छामि शास्त्रदृष्टेन कर्मणा।
कथं प्राप्स्याम्यहं कामं बुद्धिरत्रविचिन्त्यताम्। ९
ततः साध्विति तद्वाक्यं ब्राह्मणाः प्रत्यपूजयन्।
वसिष्ठप्रमुखाः सर्वे पार्थिवस्य मुखेरितम्। १०
ऊचुश्च परमप्रीताः सर्वे दशरथं वचः।
सम्भाराः सम्भ्रियन्तां ते तुरगश्च विमुच्यताम्। ११
सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम्।
सर्वथा प्राप्स्यसे पुत्रानभिप्रेतांश्च पार्थिव। १२
यस्य ते धार्मिकी बुद्धिरियं पुत्रार्थमागता।
ततस्तुष्टोऽभवद् राजा श्रुत्वैतद् द्विजभाषितम्। १३
अमात्यानब्रवीद् राजा हर्षव्याकुललोचनः।
सम्भाराः सम्भ्रियन्तां मे गुरूणां वचनादिह। १४
समर्थाधिष्ठितश्चाश्वः सोपाध्यायो विमुच्यताम्।
सरय्वाश्चोत्तरे तीरे यज्ञभूमिर्विधीयताम्। १५
शान्तयश्चापि वर्धन्तां यथाकल्पं यथाविधि।
शक्यः प्राप्तुमयं यज्ञः सर्वेणापि महीक्षिता। १६
नापराधो भवेत् कष्टो यद्यस्मिन् क्रतुसत्तमे।
छिद्रं हि मृगयन्ते स्म विद्वांसो ब्रह्मराक्षसाः। १७
विधिहीनस्य यज्ञस्य सद्यः कर्ता विनश्यति।
तद्यथा विधिपूर्वं मे क्रतुरेष समाप्यते। १८
तथा विधानं क्रियतां समर्थाः साधनेष्विति।
तथेति चाब्रुवन् सर्वे मन्त्रिणः प्रतिपूजिताः। १९
पार्थिवेन्द्रस्य तद् वाक्यं यथापूर्वं निशम्य ते।
तथा द्विजास्ते धर्मज्ञा वर्धयन्तो नृपोत्तमम्। २०
अनुज्ञातास्ततः सर्वे पुनर्जग्मुर्यथागतम्।
विसर्जयित्वा तान् विप्रान् सचिवानिदमब्रवीत्। २१
ऋत्विग्भिरुपसंदिष्टो यथावत् क्रतुराप्यताम्।
इत्युक्त्वा नृपशार्दूलः सचिवान् समुपस्थितान्। २२

